# एतस्य अङ्कस्य विशेषाः

सम्पुटः - १८ डिसेम्बर् - २००१ सञ्चिका - १०



भारतगौरवगाथा

४७



गूढभाषी संन्यासी (वेतालकथा)

१९



यक्षपर्वतः

११

देवीभागवतम्

५१







## अन्तरङ्गम्



**ग्राहकशुल्कम् -**
अमेरिका-केनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेषणीयम् -
Subscription Division
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony,
Ekkatuthangal, CHENNAI - 600 097
E.mail : subscription@chandamama.org

**उपायनीक्रियताम्**
वायुयानेन भारतेतरदेशान् प्रति
**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**
**भारते रू. १२०/- (बुक्पोस्ट् द्वारा)**
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा 'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



*संस्थापकौ –*
**चक्रपाणिः नागिरेड्डी च**

# शान्तिसौहार्दादिनिमित्तम्...

सहस्रकस्य प्रथमं वर्षं यावत् समाप्तिं गच्छत् अस्ति तावता एव श्रूयते युद्धवार्ता । सप्टम्बर्मासे अमेरिकादेशे या दुर्घटना घटिता तस्याः परिणामरूपेण अक्टोबर्मासे अफगानिस्थाने घोरदिनानि आरब्धानि सन्ति । यावत् एतत् सम्पादकीयं मुद्रणालयं गच्छति तावता शान्तिविरोधिनः केचन आतङ्कवादिनः कारागारं यमलोकं वा गताः स्युः ।

यथा कुटुम्बे प्रवृत्ता काचित् अहितकरी घटना गृहसदस्यान् एकमुखीकरोति तथैव प्रपञ्चे प्रवृत्ताः अभूतपूर्वघटनाः अपि राष्ट्राणि मेलयति । अमेरिकीयघटना कारणतः उत्पन्नाः उद्वेगकोपादयः इदानीम् उपशान्ताः सन्ति । अतः ते सर्वे सम्भूय आतङ्कवादं प्रपञ्चात् उन्मूलयितुं कार्ययोजनां चिन्तयन्तः सन्ति । एतेन प्रपञ्चे जनाः शान्त्या सुखेन च जीवितुं शक्नुयुः ।

किमपि मतं परस्परसङ्घर्षं न इच्छति । सर्वाणि अपि मतानि प्रीतिं, सौहार्दं च बोधयन्ति । अन्यच्च, वयम् एतां भूमिं प्रति अतिथयः इव आगताः । अतः अग्रिमजनता अपि अत्र सुखेन वासं कर्तुं यथा शक्नुयात् तथा एतस्याः भूमेः रक्षणम् अस्माकं सर्वेषां कर्तव्यम् । यदि वयं सर्वे एवं व्यवहरेम तर्हि स्वस्य, प्रपञ्चस्य च उन्नतिः अवश्यं भवेत् ।

समग्रस्य जगतः विषये उत्तमभावः दर्शनीयः, शान्त्या जीवनीयं च इति यः एषः क्रिसमस्पर्वणः सन्देशः अस्ति तं वयं सर्वत्र प्रसारयेम ।

---

*सम्पादकः* – **विश्रम्**

भारतनायकस्पर्धायां भागम् ऊढ्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि

# भारतीयाः नायकाः-३

भवन्तः रामायणं महाभारतं च इच्छन्ति खलु ? तौ ग्रन्थौ अवलम्ब्य चिताः केचन प्रश्नाः अत्र सन्ति । उत्तरं दातुं प्रयतन्ताम् ।

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**



1. सूर्यदेवस्य पुत्रः एषः स्वमित्राणां निमित्तं जीवनम् एव अर्पितवान् । परोपकारः तस्य स्वभावः आसीत् । सः कः ?

   ..............................................

2. गर्भस्थः एव सः व्यूहरचनाभेदं ज्ञातवान् आसीत् । तादृशं व्यूहं प्रविश्य बहिः आगन्तुम् अशक्तः सः मरणं प्राप्तवान् । सः कः ? ..............................................

3. सः वानरप्रमुखः कः, यश्च रामसन्देशवाहकत्वेन लङ्कां प्रति प्रेषितः आसीत् ?

   ..............................................

4. इच्छामरणरूपं वरं प्राप्तवान् सः शरशय्यायां शयानः मरणार्थम् उत्तमकालं प्रतीक्षमाणः आसीत् । सः कः ?

   ..............................................

5. एषः धनुर्विद्यानिपुणः भ्रातृभिः सह अज्ञातवासम् अनुभवन् वर्षं यावत् नाट्यशिक्षकः आसीत् । सः कः इति भवन्तः जानन्ति एव खलु ?

   ..............................................

प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । मम प्रियतमः नायकः ..............................................

..............................................

..............................................

..............................................

भागग्रहीतुः नाम ..............................................

वयः .................... कक्ष्या ....................

सङ्केतः ..............................................

..............................................

..............................................

पिन् .................... दूरवाणी ....................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय -

**भारतनायकस्पर्धा-३**
चन्दमामा इण्डिया लिमिटेड्,
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काटुतङ्गल्, चेन्नै - ६०० ०९७
उत्तरप्रेषणाय अन्तिमदिनाङ्कः - ५ जनवरी - २००२

***नियमाः*** -

१. अतिक्रान्त-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।



# उत्तमः चोरः

विद्याधरः बाल्यात् एव कवितासु आसक्तिमान् । काव्यस्य मुख्यभागं सः कण्ठस्थीकरोति स्म अपि । दशमे वयसि एव सः कवितारचनासमर्थः जातः । सः कविताः मधुरतया गायति स्म अपि ।

एकदा कश्चन बन्धुः तदीयगृहम् आगतः । सः विद्याधरस्य कविताः पठित्वा सन्तुष्टः सन् तदीयमातापितरौ अवदत् - ''एतं दण्डकारण्यस्थस्य वाणीनाथस्य आश्रमं प्रति प्रेषयन्तु । षड्वर्षाभ्यन्तरे एषः सर्वशास्त्रपारङ्गतः भविष्यति । ततः एतस्य भाविजीवनं सुखमयं स्यात्'' इति ।

तस्य बन्धोः सूचना अरोचत विद्याधरस्य मातापित्रोः कृते । अतः तौ पुत्रं दण्डकारण्यं प्रति प्रेषितवन्तौ । विद्याधरः गुरुकुले षड्वर्षाणि शिक्षणं प्राप्तवान् । सः श्रद्धया विद्याभ्यासं कृतवान् । अतः गुरुः वाणीनाथः अपि तद्विषये सुप्रसन्नः आसीत् । तं सर्वदा प्रशंसति स्म सः । किन्तु प्रत्यागमनस्य सप्ताहात् पूर्वं काचित् दुर्घटना घटिता ।

वाणीनाथः शिष्येण विद्याधरेण सह कन्दमूलफलादिसङ्ग्रहार्थम् अरण्यं गतवान् । यदा ते अरण्ये सञ्चरन्तः आसन् तदा यात्रिणः लुण्ठतः लुण्ठाकान् दृष्टवन्तः । वाणीनाथस्य शिष्यान् दृष्ट्वा ते लुण्ठाकाः धावितवन्तः । विद्याधरोऽपि एकं लुण्ठाकम् अनुसरन् धावितवान् । सः लुण्ठाकः वृक्षाणां मध्ये कुत्रापि अदृश्यतां गतः ।

तम् अन्विष्यन् विद्याधरः वृक्षस्य पृष्ठतः गतः । तत्र कश्चन मुनिः ध्यानमग्नः आसीत् । विद्याधरः भावितवान् यत् मया अन्विष्यमाणः चोरः एव एतादृशवेषेण अस्ति इति । अतः सः - ''किं वेषपरिवर्तनेन मां वञ्चयितुं प्रयत्नं करोति भवान् ?'' इति पृच्छन् कोपेन मुनेः



श्मश्रु बलात् आकृष्टवान् ।

मुनेः तपसः भङ्गः जातः । सः नेत्रे उद्घाट्य प्रवृत्तं सर्वं ज्ञात्वा विद्याधरं पश्यन् – ''अये मूर्ख ! मुनेः लुण्ठाकस्य च भेदम् अजानन् कीदृशः विद्यावान् भवान् ? माम् एव लुण्ठाकं भावितवान् खलु भवान् । अतः भवान् वर्षं यावत् चोरजीवनं यापयतु इति शपे । यस्मिन् दिने भवता चौर्यं न क्रियते तस्मिन् एव दिने भवता अधीता समग्रा विद्या विस्मृता भविष्यति'' इति शापं दत्तवान् ।

विद्याधरः मुनेः पादौ गृहीत्वा क्षमां प्रार्थितवान् । तथापि मुनिः दयां न प्रदर्शितवान् । अनन्यगतिकः विद्याधरः आश्रमं प्रत्यागत्य गुरुं वाणीनाथं प्रवृत्तं समग्रं निवेदितवान् ।

वाणीनाथः शिष्याय धैर्यं यच्छन् अवदत् – ''दैवायत्तं जगत्सर्वम् । प्रवृत्तस्य विषये अश्रुपातनमात्रेण किं प्रयोजनम् ? वर्षं यावत् प्रतिदिनं यदि चौर्यं न क्रियते तर्हि भवतः विद्या विलुप्ता भविष्यति खलु ? अतः भवान् काम्भोजनगरं गच्छतु । तत्र असङ्ख्याः धनिकाः सन्ति । धनिकाः प्रायः न्याय्येन मार्गेण धनं सम्पादितवन्तः न भवन्ति । भवान् तेषां गृहेषु चौर्यं करोतु । चौर्यसमये भवान् गृहीतः यथा न भवेत् तथा जागरूकता आश्रयणीया । एवं चौर्यं कुर्वन् भवान् चौर्यस्य सर्वाणि कौशलानि अवगतवान् भविष्यति । चौर्यम् अपि काचित् विद्या । तस्यां विद्यायां प्रावीण्यं प्राप्य भवान् ज्ञातान् अंशान् ताडपत्रे लिखतु । तत् अग्रे शासकानां गुप्तचराणां च कृते लाभकरं स्यात् । ततः राज्ये चौर्यं न्यूनं भवेत्'' इति ।

गुरोः सूचनायाः अनुसारं विद्याधरः काम्भोजं गतवान् । स्वस्य चातुर्यस्य उपयोगं कुर्वन् सः विविधैः प्रकारैः चौर्यम् आरब्धवान् । एतस्मात् नगरे महान् कोलाहलः उत्पन्नः । 'नूतनः चोरः नगरम् आगतः अस्ति' इति वार्ता सर्वत्र प्रसृता । तस्य ग्रहणार्थं सैनिकैः बहुधा प्रयासः कृतः । किन्तु तैः तं ग्रहीतुं न शक्तम् ।

गुरोः आदेशस्य अनुगुणम् आत्मना ज्ञातान् अंशान् तालपत्रेषु लिखति स्म विद्याधरः । सः श्रीकरनामकस्य मध्यमवर्गीयस्य कस्यचित् गृहे वसति स्म । तस्य पाण्डित्यस्य दर्शनात् गृहसदस्याः यथा तथैव प्रातिवेशिकाः अपि आश्चर्यचकिताः आसन् । तस्य व्यवहारः अत्युत्तमः आसीत् । अतः तस्मिन् सन्देहः

कस्यापि न जातः एव । स तु प्रतिदिनं चौर्यं करोति स्म एव । एवमेव दिनानि गतानि ।

श्रीकरस्य सुन्दरी काचित् पुत्री आसीत् । विद्याधरस्य कवितां श्रुत्वा सा नितरां सन्तुष्टा भवति स्म । कदाचित् विद्याधरः दिनं यावत् दृष्टिगोचरः न जातः । अतः सा तस्य प्रकोष्ठं गतवती । तत्र तया ताडपत्राणि दृष्टानि । तेषां पठनात् सा ज्ञातवती यत् नगरे यत् चौर्यं प्रचलति तस्य कारणं विद्याधरः एव इति । एतत् ज्ञात्वा सा आश्चर्यचकिता भीता च । तानि ताडपत्राणि गृहीत्वा यावत् सा प्रकोष्ठात् निर्गता, तावता विद्याधरः तत्र आगतः । किं प्रवृत्तं स्यात् इति तेन झटिति अवगतम् ।

''इतः परम् एकम् एव दिनम् अहम् एतस्मिन् नगरे स्थास्यामि । यावत् अहम् अत्र भवामि तावत् एषः अंशः केनापि ज्ञातः न भवेत् । भवती कथमपि एतं विषयं जानाति । यदि अन्यं कमपि भवती वदेत् तर्हि भवतीम् एव यमलोकं प्रेषयिष्यामि'' इति अवदत् विद्याधरः ।

श्रीकरपुत्री एतत् श्रुत्वा भीत्या कम्पमाना जाता । सा उक्तवती - ''एतस्य पठनात् मया ज्ञातं यत् श्वः भवान् कुत्र चौर्यं करिष्यति इति । तथापि एतां वार्ताम् अहं कमपि न वदिष्यामि । कृपया मां मा मारयतु'' इति ।

विद्याधरः तस्याः वचने विश्वासं कृतवान् । किन्तु सा स्ववचनं न पालितवती । प्रवृत्तं सर्वं पितरम् उक्तवती सा । तस्याः पिता तं विषयं नगररक्षकम् उक्तवान् । अतः अनन्तर-दिने चौर्यसमये तैः विद्याधरः विनायासं गृहीतः, कारागारे स्थापितः च ।



एषा वार्ता नगरे महान्तं कोलाहलम् अजनयत् । नगरपालकः जनानां पुरतः विद्याधरस्य विचारणां कारितवान् । तदा विद्याधरः स्वस्य कथां श्रावितवान् । सर्वं श्रुत्वा नगरपालकः अवदत् - ''भवतः कथायां मम विश्वासः नास्ति । तथापि वाणीनाथस्य आश्रमं प्रति दूतं सम्प्रेष्य वस्तुस्थितिं ज्ञास्यामि । मम केचन सन्देहाः निवारणीयाः भवता । भवान् पण्डितः । गुरोः अनुग्रहमात्रेण कृतानि चौर्याणि न ज्ञायन्ते जनैः इति कथं निर्णीतं भवता ? अन्तिम-चौर्यसमये वा भवान् गृहीतः अभवत् एव । एतस्मात् भवतः प्रयत्नाः निष्फलाः जाताः'' इति ।

''मया सामान्यजनाः न पीडिताः । धनिकानां गृहेषु एव चौर्यं कृतम् । कस्य कस्य गृहे किं किं चोरितम् इति मया विस्तरेण

लिखितम् अस्ति । चोरितं सर्वं मत्समीपे सुरक्षिततया अस्ति अपि । शापावधेः समाप्तेः अनन्तरं मया धनं प्रत्यर्पयिष्यते । एवं करणात् मया कृतस्य पापस्य प्रायश्चितं भविष्यति इति मम चिन्तनम्'' इति अवदत् विद्याधरः ।

तदा नगरपालकः हसन् उक्तवान् - ''यदा भवान् श्रीकरस्य पुत्र्यां विश्वासं कृतवान् तदा एव भवतः योजना असफला जाता । वस्तुतः अपि यदि शापात् भवतः भीतिः स्यात् तर्हि भवान् तस्याः हननम् अकरिष्यत् । किन्तु भवता तत् न कृतम् । अतः भवतः कथने विश्वासः न जायते मम'' इति ।

एतत् श्रुत्वा विद्याधरः करौ योजयित्वा उक्तवान् - ''श्रीमन् ! मया यत् चौर्यं कृतं ततः प्राप्तानि वस्तूनि प्रत्यर्पणयोग्यानि । किन्तु कस्यापि हननं कृतं चेत् प्राणान् प्रत्यर्पयितुं मम सामर्थ्यं नास्ति खलु ? अतः मया तस्याः हननं न कृतम् । तर्जनमात्रं कृतम् । शापात् अशिक्षितत्वं प्राप्येत इति भीत्या एव मया चौर्ये प्रवृत्तं, न तु धनाद्याशया । चोरेषु अपि उत्तमाः भवन्ति केचन । अनन्यगतिकतया ते चोराः भवन्ति कदाचित् । मुनिशापकारणतः चोरवृत्तिम् आश्रितः अहम् उत्तमचोरेषु अन्तर्भवामि । केचन जीविकानिर्वहणार्थं चौर्यं कुर्वन्ति । तेषु परिवर्तनम् आनेतुं मम व्यवहारः उत्तमम् उदाहरणं भवितुम् अर्हति । अन्यच्च चोररहस्यानि ताडपत्रेषु लिखितानि सन्ति मया । तेषाम् आधारेण चोराणां निग्रहणं सुलभसाध्यं भविष्यति । एवं चौर्यं कुर्वता अपि मया देशस्य उपकारः एव कृतः'' इति अवदत् विद्याधरः ।

तस्य वचनं श्रुत्वा तत्रत्याः सर्वे करताडनं कृतवन्तः । नगरपालकः विद्याधरं बन्धमुक्तं कृतवान्, तस्य सम्माननम् अपि कृतवान् ।

चौर्यरहस्यानि यानि विद्याधरेण सङ्गृहीतानि आसन् तानि अधिकारिणां गुप्तचराणां च कृते नितराम् उपकारकाणि जातानि । तेषाम् अध्ययनतः ते चोराणां निग्रहणे समर्थाः जाताः । एतस्मात् देशे चौर्याणि हननप्रकरणानि च न्यूनानि जातानि ।





# यक्षपर्वतः

## १०

*(वीरपुरराजस्य आज्ञायाः अनुसारं सेनाध्यक्षः कैश्चित् सैनिकैः सह अरण्यं गतवान् । सः पर्वतदुर्गस्य समीपं गत्वा स्वर्णाचार्यनेतृत्वयुक्तान् समरबाह्वनुचरान् उक्तवान् यत् शरणं गच्छन्तु इति । किन्तु समरबाह्वनुचराः पराजयम् अङ्गीकर्तुं न सिद्धाः । ते शूलायुधानि गृहीत्वा वीरपुरसैनिकानाम् उपरि आक्रमणं कृतवन्तः । तैः क्षिप्तम् एकं शूलायुधं सेनाध्यक्षस्य स्कन्धे लग्नम् । अतः सः व्रणितः जातः । तदनन्तरम् ....)*

स्कन्धे शूलं लग्नम् इत्यतः सेनाध्यक्षः उच्चैः आक्रन्दनं कृतवान्, अधः पतितवान् च । एतस्मात् तस्य स्कन्धे लग्नं शूलं पार्श्वे पतितम् । सैनिकाः तं दूरे नीतवन्तः, व्रणस्थलं वस्त्रपट्टिकया बद्धवन्तः च ।

अनुचरान् प्रशंसन् स्वर्णाचार्यः उक्तवान् - ''सकृत् वयं शत्रून् भीतान् कृतवन्तः । वयं यद्यपि पञ्चविंशतिः जनाः स्मः, तथापि शत्रवः चिन्तितवन्तः स्युः यत् वयं बहवः स्याम इति । अस्माकं शौर्यम् असाधारणम् इति ते चिन्तितवन्तः स्युः'' इति ।

एतत् श्रुत्वा समरबाह्वनुचरेषु अन्यतमः अवदत् - ''महामन्त्रिवर्य ! यदि शत्रवः पर्वतारोहणप्रयत्नं कुर्युः तर्हि अस्माभिः नियुक्ताः अरण्यवासिनः तान् बहुधा पीडयेयुः । सिंहव्याघ्रादयः अपि आक्रमणं कुर्युः । तेन शत्रवः इतस्ततः विकीर्णाः भवेयुः'' इति ।

तदा समरबाह्वनुचरः अपरः अवदत् - ''महामन्त्रिवर्य ! अनुज्ञा दीयताम् । वयं सर्वे सङ्घीभूय शत्रूणाम् उपरि अभिपताम । तान् सर्वान् नाशयित्वा शत्रूणाम् अश्वान् वशीकरवाम'' इति ।

स्वर्णाचार्यः तान् वस्तुस्थितिम् अवगमयन्



अवदत् - ''शत्रूणां सङ्ख्या महती अस्ति । अतः एतादृशे अवसरे त्वरा न शोभते । अस्माकं सर्वे उष्ट्राः पर्वतस्य अधोभागे सुरक्षिततया रक्षिताः स्युः खलु ?'' इति ।

''ते सर्वे पर्वतमूले सुरक्षिताः सन्ति महामन्त्रिवर्य ! अस्माकम् उभौ अनुचरौ तेषां रक्षणे नितरां स्तः । अतः तेषां विषये चिन्ता करणीया नास्ति'' इति उक्तवान् कश्चन अनुचरः ।

''अल्पः विजयः साधितः इत्यतः युद्धम् एव समाप्तम् इति न चिन्तनीयम्'' इति वदन् स्वर्णाचार्यः अश्वारोहणोद्यतान् वीरपुर-सैनिकान् दर्शितवान् ।

वीरपुरीयसैनिकाः व्रणितं सेनाध्यक्षम् अश्वस्य उपरि उपवेश्य किञ्चिद्दूरं नीतवन्तः । 'पर्वतम् आरोढुं सुरङ्गमार्गम् अन्विष्यन्तः सन्ति ते' इति अवगतवन्तः समरबाहुपक्षीयाः ।

स्वर्णाचार्यः स्वस्य अनुचरान् उद्दिश्य - ''सर्वे सावधानाः भवन्तु । शूलानि क्षेप्तुम् उद्युक्ताः च भवन्तु'' इति उक्त्वा यत्र सिंहव्याघ्रादयः स्थापिताः आसन् तत्र गतवान् ।

सिंहस्य एकं पञ्जरं गुहायाः द्वारे एव स्थापितम् आसीत् । व्याघ्राणां पञ्जराणि अपरगुहाद्वारे स्थापितानि आसन् । एकैकस्य पञ्जरस्य उपरि अपि उभौ अरण्यवासिनौ उपविष्टौ आस्ताम् ।

स्वर्णाचार्यं दृष्ट्वा अरण्यवासिनः अवदन् - ''वीरपुरीयसैनिकाः पर्वतम् आरुह्य यदा अस्मत्समीपम् आगच्छन्ति तदा वयं पञ्जराणां द्वाराणि उद्घाटयिष्यामः । ततः अस्मदीयाः पर्वतस्य ऊर्ध्वभागं प्रति धाविष्यन्ति । बुभुक्षिताः क्रूरजन्तवः शत्रून् आक्रम्य खादिष्यन्ति'' इति ।

तेषाम् एतां व्यवस्थां दृष्ट्वा स्वर्णाचार्यः तृप्तिं प्रकटितवान् । सः ततः समर-बाह्वनुचराणां समीपम् आगत्य पर्वतस्य मूलभागे दृष्टिं प्रसारितवान् । वीरपुरीय-सैनिकाः सेनाध्यक्षस्य आज्ञाम् अनुसरन्तः पादाभ्यां पर्वतम् आरोढुम् उद्युक्ताः आसन् । तेषु केचन धनुर्बाणादिकं धृतवन्तः आसन् ।

समरबाह्वनुचराः यदा शूलानि वर्षन्ति स्म तदा ते किञ्चित् तिष्ठन्ति स्म, बाणप्रयोगं कुर्वन्ति स्म च । एतस्मिन् एव अवसरे केचन अश्वारोहिणः उपायेन पृष्ठतः पर्वतस्य आरोहणे उद्युक्ताः अभवन् ।

स्वर्णबाहुः अपायस्य उपस्थितिम् अवगतवान् । सः अनुचरेषु धैर्यं पूरयन्

अवदत् - ''उष्ट्रवीराः ! भवन्तु केचन अश्वारोहिणां शत्रूणाम् उपरि महाशिलाः पातयन्तु । शूलादिक्षेपणं तु यथापूर्वम् अनुस्यूततया अनुवर्तताम्'' इति ।

समरबाह्वनुचराः महाशिलाः नुदन्तः वीरपुरीयसैनिकान् लक्ष्यीकृत्य पातितवन्तः । मध्ये स्थितानां वृक्षगुल्मशिलादीनां कारणतः ताः शिलाः इतस्ततः सञ्चरन्त्यः लक्ष्यस्य उपरि न पतिताः एव ।

वीरपुरीयसैनिकाः एतत् दृष्ट्वा परमानन्दम् अनुभवन्तः महता उत्साहेन अग्रे आगतवन्तः । तान् अनुसरन्तः अश्वारोहिणः आगच्छन्तः आसन् । ते उद्यतखड्गाः आसन् । राज्ञः जयकारं घोषयन्तः आसन् सर्वेऽपि ।

अत्रान्तरे व्याघ्राणां सिंहानां च आक्रमणं प्रवृत्तम् आकस्मिकतया । पञ्जरात् बहिः आगताः व्याघ्राः सिंहाः च वीरपुरीयसैनिकानाम् उपरि अभिपतितवन्तः । एतत् आक्रमणं सम्मुखीकर्तुं वीरपुरीयाः सन्नद्धाः न आसन् । अतः तेषां मध्ये महान् कोलाहलः उत्पन्नः । तेषां पृष्ठतः स्थिताः अश्वाः व्याघ्रादीन् दृष्ट्वा नितरां भीताः । अतः ते इतस्ततः धावितुम् उद्युक्ताः जाताः । केचन अश्वाः अश्वारोहिसहिततयैव पर्वतात् पतिताः । यदा पुरतः कोऽपि न स्थितः तदा सिंहव्याघ्रादयः निर्बाधम् अरण्यं प्राविशन् ।

एतत्सर्वं दृष्ट्वा स्वर्णाचार्यः नितरां सन्तुष्टः । सः अनुचरान् उद्दिश्य अवदत् - ''शत्रुसैनिकाः केचन व्रणिताः मृताः च स्युः । तथापि अवशिष्टानां शत्रूणां सङ्ख्या न अल्पा । यदि ते सम्भूय आक्रमणं कुर्युः तर्हि तान् सम्मुखीकर्तुं



वयं न शक्नुयाम । अधः ये उष्ट्राः सन्ति तान् आरुह्य इतः पलायनम् एव इदानीं श्रेयसे । इतः गच्छेम चेत् समरबाहुः, तौ उभौ क्षत्रियवीरौ च मिलिताः स्युः कदाचित् । अतः उष्ट्रसमीपं गन्तुं सर्वे सिद्धाः भवन्तु'' इति ।

एवं वदन् सः उष्ट्रान् उद्दिश्य प्रस्थितवान् । अन्ये तम् अनुसृतवन्तः ।

यदा ते निश्चितस्थलं प्राप्य उष्ट्रान् आरुह्य ततः गन्तुम् उद्युक्ताः तदा द्विशतबाहुपरिमाणदूरे खड्गहस्ताः वीरपुरीयाः सैनिकाः दृष्टाः । ते एतान् अभिमुखीकृत्य एव आगच्छन्तः आसन् ।

एतत् दृष्ट्वा स्वर्णाचार्यः स्वस्य खड्गम् उन्नीय अनुचरान् उद्दिश्य - ''अयि भोः उष्ट्रवीराः ! सर्वे माम् अनुसरन्तु । शत्रून् दुर्गादेव्यै बलिरूपेण अर्पयाम । समरबाहुमहाराजः

जयतात् !'' इति वदन् अग्रे गतवान् । वीरपुरीयसैनिकाः अपि - 'वीरपुरीयमहाराजः जयतात्' इति घोषयन्तः अग्रे आगतवन्तः ।

स्वर्णाचार्यः महता धैर्येण अग्रे गतवान् । एतत् दृष्टवताम् अनुचराणाम् उत्साहः प्रवृद्धः । ते अपि शत्रूणाम् उपरि अभिपतितवन्तः । एवम् उभयपक्षीयाणां सैनिकानां मध्ये घोरं युद्धं प्रवृत्तम् ।

पञ्च निमेषान् यावत् युद्धं प्रवृत्तम् । एतस्मिन् युद्धे उभयपक्षीयाः अपि सैनिकाः बहवः व्रणिताः । अश्वात् उष्ट्रात् च ते पतिताः । स्वर्णाचार्यः स्वस्य अनुचरान् सावधानान् कृत्वा शत्रूणां मध्यतः एव अरण्यं प्रति धावितवान् । पञ्चदश अनुचराः तम् अनुसृतवन्तः ।

तावता व्रणितः सेनाध्यक्षः तत्र उपस्थितः । धावन्तं स्वर्णाचार्यं तदनुचरान् च दृष्ट्वा सः उक्तवान् - ''शत्रूणां सङ्ख्या अङ्गुलिगणनीया आसीत् । तथापि ते पलायितवन्तः । एतत् तु नितराम् अपमानकरम् । अस्माकम् असामर्थ्यस्य अशक्ततायाः च द्योतकम् एतत् । मया यः अश्वनायकः प्रेषितः आसीत् सः क्व ? सः जीवति उत मृतः ?'' इति ।

तस्य एतम् उच्चध्वनिं श्रुत्वा अश्वनायकः सेनाध्यक्षसमीपं गतवान् । तं दृष्ट्वा सेनाध्यक्षः महता क्रोधेन - ''ते न युद्धवेषं धृतवन्तः आसन्, न वा महन्ति आयुधानि धृतवन्तः आसन् । तथापि प्रशिक्षितेषु समरनिपुणेषु अस्मासु सत्सु ते कथं पलायितवन्तः ? कथं वा ते अस्माकं कांश्चन सैनिकान् मारयितुं शक्तवन्तः ? नितरां लज्जास्पदम् एतत् । महाराजः यदि प्रवृत्तं सर्वं जानीयात् तर्हि आवाम् उभौ अपि शूलम् आरोपयेत् । किम् एतत् ज्ञायते भवता ?'' इति अगर्जत् ।

तदा दलनायकः कम्पमानस्वरेण अवदत् - ''सेनाध्यक्षवर्य ! तेषां नायकः न सामान्यः । सः यद्यपि बलहीनः इव, प्रभावहीनः इव, सामान्यः इव च भासते, तथापि सः शूरः बुद्धिमान् च अस्ति । तदीयाः अनुचराः तं 'महामन्त्रि'पदेन निर्दिशन्ति । तस्य पराक्रमं,



बाहुबलं च पश्यामः चेत् भासते यत् सः महाभारतयोद्धा इव अस्ति इति । ..."

दलनायकस्य कथनं मध्ये एव स्थगयन् सेनाध्यक्षः उच्चस्वरेण अवदत् - "अये ! एतत् गुणगानं स्थगयतु । स्वकर्तव्यं स्मरतु । पञ्चभिः सैनिकैः सह इतः निर्गत्य अरण्यं प्रविशतु । ते कुत्र निलीय स्थिताः इति ज्ञात्वा तान् गृह्णातु । तदभ्यन्तरे अहं दुर्गं वशीकरिष्यामि । वीरपुरस्य ध्वजं दुर्गस्य उपरि उड्डाययिष्यामि । ततः अहम् अपि ससैन्यः भवतः मार्गम् अनुसरिष्यामि । मम आदेशं यथास्थितं पालयतु" इति ।

दलनायकः ततः प्रस्थितवान् । किन्तु तावता स्वर्णाचार्यः ततः सुदूरं निर्गतवान् आसीत् । मध्येमार्गं तेन एकं सरोवरं दृष्टम् । स्वर्णाचार्यः समरबाह्वनुचराः च तत्र गमनं स्थगितवन्तः । जलं पीत्वा उष्ट्रान् जलं पायितवन्तः च । ततः चरणार्थं ते उन्मुक्ताः । समरबाहोः द्वौ अनुचरौ फलानाम् आहरणार्थं ततः गताः । एवम् एव अर्धघण्टा अतीता । फलार्थं गतौ तौ सरोवरसमीपे उभौ भल्लूकचर्मधारिणौ दृष्टवन्तौ । तौ धावन्तौ स्वर्णाचार्यसमीपम् आगत्य एतां वार्तां श्रावितवन्तौ ।

"एतादृशाः भल्लूकचर्मधारिणः एव समरबाहोः बन्धनं कृतवन्तः आसन्" इति स्वर्णाचार्यः यावत् वदन् आसीत् तावता तौ भल्लूकचर्मधारिणौ तत्समीपम् एव आगतौ । तयोः अन्यतरः उष्ट्रं दृष्ट्वा अन्यस्मै प्रदर्शयन् - "अम्ब ! वृकेश्वरि ! भवती एव शरणम् अस्माकम्" इति अवदत् ।

अनन्तरक्षणे वृक्षाणां मध्यतः स्वर्णाचार्यः



तदनुचराः च - "समरबाहुमहाराजः जयतात्" इति वदन्तः शूलायुधं गृह्णन्तः तयोः दिशि गतवन्तः । एतत् दृष्ट्वा नितरां भीतौ भल्लूकचर्मधारिणौ - "हे वृकेश्वरि ! किं कृतं भवत्या ! आवाम् इदानीम् अपायग्रस्तौ स्वः" इति वदन्तौ ततः पलायितवन्तौ ।

धावन्तौ भल्लूकचर्मधारिणौ दृष्टवन्तः खड्गवर्मा, जीवदत्तः, समरबाहुः, भल्लूकगुरुः च तयोः मुखात् स्वर्णाचार्यस्य वार्तां ज्ञातवन्तः ।

"स्वर्णाचार्यः तु दुर्गनिर्माणकार्ये व्यग्रः आसीत् । तस्य आगमनं कथम् अभवत् अत्र ? सः अपायग्रस्तः तु न स्यात् खलु ?" इति संशयपुरस्सरम् उक्तवान् जीवदत्तः ।

"स्वर्णाचार्यस्य स्वामिभक्तिः अप्रतिमा । सः भल्लूकचर्मधारिभ्यः मां रक्षितुम् अत्र आगतवान् स्यात्" इति सन्तोषेण उक्तवान्



समरबाहुः ।

एवं वार्तालापं कुर्वन्तः ते सरोवरसमीपम् आगतवन्तः । तान् दृष्ट्वा स्वर्णाचार्यः नितरां सन्तुष्टः । सः तेषां समीपे धावन् गत्वा – ''समरबाहुमहाराज ! क्षत्रियवीरौ ! एषः प्रणामाञ्जलिः मम'' इति नमस्कुर्वन् अवदत् ।

''स्वर्णाचार्य ! एवं भाति यत् दुर्गनिर्माण-कार्यम् असमाप्य एव भवान् अरण्ये विहारार्थम् आगतः इति । एवं ननु ?'' इति अपृच्छत् जीवदत्तः ।

''क्षत्रियवीरौ ! तच्च दुर्गम् इदानीं शत्रूणाम् अधीनं जातम् । अहं समरबाह्वनुचराः च तस्य रक्षणार्थं यथाशक्ति प्रयत्नं कृतवन्तः । किन्तु ततः फलं तु न सिद्धम् । केचन अस्मदीयाः स्वर्गं गताः'' इति खेदेन उक्तवान् स्वर्णाचार्यः ।

''इदानीं कति अनुचराः अवशिष्टाः ?'' इति पृष्टवान् खड्गवर्मा ।

''माम् अपि अविहाय षोडश जनाः । अस्माकं वाहनभूताः उष्ट्राः अपि अत्रैव सन्ति'' इति उक्तवान् स्वर्णाचार्यः ।

''किम् उक्तम् ? शत्रुभिः दुर्गम् आक्रान्तम् इति ? किं तत् शत्रूणाम् अधीनम् अस्ति इदानीम् ? ते शत्रवः के ?'' इति कठोरस्वरेण पृष्टवान् समरबाहुः श्मश्रुणः उपरि हस्तं स्थापयन् ।

स्वर्णाचार्यः प्रवृत्तं सर्वं निवेदितवान् ।

सर्वं श्रुत्वा समरबाहुः दीर्घं निश्श्वसन् उक्तवान् – ''एतस्य तात्पर्यं यत् दुर्गे रहस्यरूपेण सङ्गृहीतं धनं शत्रूणाम् अधीनं जातं स्यात् इति । एवं तर्हि वीरपुरमहाराजः क्षमायोग्यः न । तस्य अन्त्यं करणीयम् एव । खड्गवर्मन् ! जीवदत्त ! भवतोः साहाय्यं विना मम लक्ष्यं पूर्णं भवितुं न अर्हति'' इति ।

जीवदत्तः क्षणं यावत् विचिन्त्य अवदत् – ''समरबाहो ! भवतः गणः अल्पः आसीत् । अन्यच्च वीरपुरीये प्रदेशे भवान् दुर्गं निर्मान् आसीत् । तत् निवारितं वीरपुरीयैः । एवं स्थिते प्रतीकारस्य का वा प्रसक्तिः ? अरण्ये कस्मिंश्चित् प्रदेशे कृषिं कुर्वन् अनुचरैः सह वसन् सुखेन जीवतु । एतस्मात् भवतः काऽपि चिन्ता न भविष्यति'' इति ।

समरबाहुः उत्तरं किमपि न दत्तवान् । सः शिरः अवनमय्य मौनेन स्थितः आसीत् । तदा स्वर्णाचार्यः अवदत् – ''वीरवरौ ! मम काचित् विज्ञप्तिः अस्ति । एतस्य नामश्रवणतः स्पष्टं ज्ञायते यत् एषः क्षत्रियकुलीयः एव कश्चित् इति । एषः महाराजः स्यात्, अहं च

एतस्य मन्त्री स्याम् इति मम इच्छा । भवतोः साहाय्यं प्राप्तं चेदेव मम इच्छा पूर्णा भवेत् । अतः निराकृतिः न दर्शनीया इति मम प्रार्थना । पर्वतप्रदेशात् वीरपुरराजस्य अपसारणं कृत्वा समीपस्थग्रामेषु आधिपत्यं संस्थाप्य एकं राज्यं तु संस्थापयितुं शक्यम् । भवतोः साहाय्यम् अस्ति चेदेव एषः स्वप्नः साकारतां गच्छेत्'' इति ।

जीवदत्तः खड्गवर्मणं पश्यन् अवदत् - ''खड्गवर्मन् ! एतावतः साहाय्यस्य दाने न काऽपि आपत्तिः स्यात्'' इति ।

ततः सः स्वर्णाचार्यं पश्यन् अवदत् - ''आदौ अस्माभिः वीरपुरीयसैनिकानां विषये चिन्तनीयम् । ते सङ्ख्यया अधिकाः स्युः, वयं तु अल्पाः । अतः प्रत्यक्षयुद्धे तान् जेतुं न शक्नुयाम कदाचित् । उपायेन कार्यं साधनीयम् अस्माभिः । अतः ते सैनिकाः भल्लूकगुरोः गुहां प्रति कथमपि आनेतव्याः'' इति ।

''एतत् कथं शक्येत जीवदत्तवर्य ?'' इति सन्देहेन अपृच्छत् स्वर्णाचार्यः ।

''तत् तु न कष्टकरम् । भल्लूकगुरोः शिष्येषु द्वित्राः वीरपुरीयं सेनाध्यक्षं दृष्ट्वा वदन्तु यत् वयं सर्वे गुहायां निलीय स्थिताः स्मः इति । अस्मान् मारयितुं ते गुहां प्रविशेयुः एव'' इति अवदत् जीवदत्तः ।

ततः सः भल्लूकगुरुं पश्यन् अपृच्छत् - ''भल्लूकगुरो ! भवतः शिष्याः कदाचिदपि भवतः वचनं न तिरस्करिष्यन्ति इत्येतत् सत्यं खलु ? कदाचिदपि ते गुरुद्रोहं न आचरन्ति खलु ?'' इति ।

''श्रीमन् ! अहम् आज्ञां करोमि चेत् ते पर्वतशिखरात् पतितुम् अपि सन्नद्धाः भवन्ति । अत्र पर्वतः नास्ति इत्यतः तत् प्रत्यक्षं दर्शयितुं न शक्नोमि'' इति जीवदत्तम् उक्त्वा सः अनुचरान् उद्दिश्य आज्ञापयत् - ''भवत्सु कश्चित् उन्नतस्य वृक्षस्य शिखरं प्राप्य ततः कूर्दनं करोतु'' इति ।

जीवदत्तः 'एवं मास्तु' इति बहुधा वदन् आसीत् चेदपि कश्चन भल्लूकचर्मधारी सैनिकः समीपस्थम् एकं वृक्षम् आरुह्य अन्तिमशाखां प्राप्य - ''गुरुवर्य ! एषः मम अन्तिम-प्रणामः । आशिषा अनुग्राह्यः अहम्'' इति वदन् अधोमुखतया शाखातः उत्पतितवान् एव । - *(अनुवर्तते)*



अत्रास्ति प्रश्नावली !!

# कोणार्कः



ओरिस्सानगरे स्थिते कोणार्के जगत्प्रसिद्धः सूर्यदेवालयः अस्ति । एषः त्रयोदशे शतके निर्मितः । एतस्य शिल्पकला अत्यपूर्वा ।

कोणार्कपदस्य अर्थः भवितुम् अर्हति - 'कोणस्य अर्कः' इति । तन्नाम 'एषः प्रदेशः सूर्यसम्बन्धिकोणः' इति तात्पर्यं सिद्ध्यति ।

सूर्यस्य रथत्वेन एषः देवालयः निर्मितः अस्ति । एतस्य रथाकारकस्य देवालयस्य द्वादश चक्राणि सन्ति । सप्त अश्वाः एतं रथं वहन्ति । द्वादश चक्राणि द्वादश मासान् सङ्केतयन्ति । तथैव सप्त अश्वाः सप्ताहस्य सप्त वासरान् द्योतयन्ति । एतत् मन्दिरं बङ्गलोपसागरस्य तीरे अस्ति । अतः तस्मिन् पतिताः सूर्यकिरणाः प्रतिफलिताः सन्तः मन्दिरशोभां वर्धयन्ति । एषः देवालयः 'कृष्ण-पगोडा' इति निर्दिश्यते । सप्ततिमीटरौन्नत्ययुक्तम् एतस्य शिखरम् अद्य विनष्टम् अस्ति । तथापि नृत्यशाला, सभाभवनम् इत्यादयः अक्षताः एव सन्ति । समग्रे मन्दिरे उत्तमा शिल्पकला परिदृश्यते । 'युनेस्को'संस्थया वैश्विक-पारम्परिक-सम्पत्ति-क्षेत्रत्वेन परिगणितेषु एतत् अपि अन्यतमम् अस्ति ।

कोणार्के वस्तुसङ्ग्रहालयः अपि कश्चन अस्ति । तस्मिन् भग्नावशेषाणां मध्यतः चित्वा संरक्षितानि अमूल्यशिल्पानि सन्ति । दर्शनयोग्यः अस्ति अयं वस्तुसङ्ग्रहालयः ।

## प्रश्नोत्तरस्पर्धा भवदर्थम् !

ऊनचतुर्दशवर्षीयाः अत्र भागं वोढुम् अर्हाः !!

1. सूर्यदेवालयात् अनतिदूरे कुशभद्रसमुद्रयोः सङ्गमस्थले अपरः प्रसिद्धदेवालयः अस्ति । सः कः ?

..................................................

2. पूर्वं नौकास्थानं यत् आसीत्, तत् इदानीं च समुद्रविहारस्थलम् (बीच्) अस्ति । तस्य नाम किम् ?

..................................................

3. कः जलबन्धः एशियाखण्डे एव अतिबृहत् कृत्रिमसरोवरम् इति ख्यातं सरोवरं निर्माति ?

..................................................

भवताम् उत्तराणि रिक्ते स्थले लिखित्वा नामसङ्केतादिभिः अधस्तनं विवरणपत्रं प्रपूर्य अधोनिर्दिष्टसङ्केताय प्रेषयन्तु -

Orissa Tourism Quiz Contest
Chandamama India Limited
No.82, Defence Officers Colony
Ekkatuthangal, Chennai - 600 097

नाम - ..................................................

वयः ..................................................

सङ्केतः - ..................................................

..................................................

Pin : .............. Phone ..............



Winners picked by Orissa Tourism in each contest will be eligible for 3-days, 2-night stay at any of the OTDC Panthanivas, upto a maximum of four members of a family. Only original forms will be entertained. The competition is not open to CIL and Orissa Tourism family members. Orissa Tourism, Paryatan Bhaven, Bhubaneswar-751 014. Ph: (0674) 432177, Fax : (0674) 430887, e-mail : ortour@sancharnet.in. Website : Orissa-tourism.com



## वेताल-कथा

# गूढभाषी संन्यासी

घोरः अन्धकारः । विद्युतः स्फुरन्ति । मेघाः गर्जन्ति । शृगालादीनां रवः श्रूयते । मार्गपार्श्वे पतिताः कपालादयः भयं जनयन्ति । तथापि दृढव्रती त्रिविक्रमः पुनरपि वृक्षम् आरुह्य शवं स्कन्धे आरोप्य अधः आगत्य यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान् ।

तदा शवान्तर्गतः वेतालः अवदत् – "अये राजन् ! किमर्थं भवता एवं व्यर्थप्रयत्नः क्रियते ? असाफल्यं निश्चितम् इति भवान् जानाति एव । तथापि एतस्मिन् कार्ये प्रवृत्तिः किमर्थम् भवतः ? बहुधा असाफल्यं प्राप्य अपि भवान् किमर्थं विवेकं न प्राप्नोति इत्येव आश्चर्यं मम । कः जामातृत्वेन



प्राप्तात् अनुभवात् यः विवेकं न प्राप्नोति तं किं वा वदेम ? मूर्खः इति खलु ? किं भवान् मूर्खः भवितुम् इच्छति ? न खलु ? कः भवन्तम् एतस्मिन् कार्ये प्रवर्तितवान् ? कश्चन निगूढभाषी संन्यासी राजा वा भवन्तम् अत्र प्रवर्तितवान् न स्यात् खलु ? निगूढभाषिणाम् अन्तरङ्गे किम् अस्ति इति अवगमनं महते क्लेशाय । एतम् अंशं स्पष्टीकर्तुम् अहं काञ्चित् कथां श्रावयामि । मार्गायासपरिहारार्थं तां कथां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं तेन कथा आरब्धा –

पूर्वं मार्तण्डदेवः नाम कश्चन राजा आसीत् । सः कञ्चित् आप्तसहायकम् इच्छति स्म । युक्तायुक्तपरिज्ञानवान् विवेकी बुद्धिमान् जनः आप्तसहायकत्वेन चेतव्यः इति तस्य इच्छा ।

मणिभद्रः नाम कश्चन तादृशः तस्य आस्थाने आसीत् । तम् आप्तसहायकस्थाने नियोक्तुं यावत् राजा चिन्तयन् आसीत् तावता राज्ञी अपरं नाम सूचितवती । तच्च आसीत् विश्वबन्धुः इति । विश्वबन्धुः राज्ञ्याः मातुलः ।

''मम मातुलः विश्वबन्धुः मणिभद्रात् अपि श्रेष्ठतरः । सः अनुभवी ज्येष्ठः चापि । शासनव्यवहारे उच्चस्थाने बान्धवाः एव नियोजनीयाः इति किं भवान् न जानाति ? बान्धवाः एव नियुक्ताः चेत् शासनरहस्यानि गोपितानि भवन्ति । अन्यः कदापि विश्वासार्हः न भवति । अतः आप्तसहायकस्थाने स्थातुं सः एव योग्यः । अतः तम् एव नियोजयतु'' इति उक्तवती राज्ञी ।

''शासनपदे नियुक्तिसमये बान्धव्यं प्रामुख्येन न परिगणनीयम् इति मम अभिप्रायः । नियोज्यमानस्य सामर्थ्यं प्राधान्येन द्रष्टव्यम् । अन्यथा राज्यं विनष्टं स्यात् । भवत्या यथा उक्तं तथा विश्वबन्धुः एतत्स्थानार्थम् अर्हः एव चेत् तस्य नियुक्तौ मम न कोऽपि आक्षेपः । अतः उभयोः अपि सामर्थ्यस्य परीक्षां करवाम । तत्र यः उत्तीर्णः भवति सः एव तत् स्थानम् अलङ्करिष्यति'' इति राजा अवदत् । राज्ञी एतत् मौनेन अङ्गी-कृतवती ।

तयोः परीक्षार्थं कश्चन सन्निवेशोऽपि अविचिन्तिततया उपस्थितः । राजधान्यां कश्चन वणिक् वसति स्म । तस्य एका सुन्दरी पुत्री आसीत् । तां परिणेतुं त्रयः तरुणाः इच्छन्ति स्म । त्रयाणाम् अपि समानयोग्यता । अतः

स्वीकरणीयः इति वणिजः समस्या ।

राजधानीतः अनतिदूरे पर्वते कश्चन संन्यासी निवसति स्म । तस्मिन् विशेषादरः आसीत् वणिजः । तान् त्रीन् अपि संन्यासिनः समीपं प्रेषितवान् वणिक् । संन्यासिनः निर्णयम् आदेशं भावयति स्म सः ।

संन्यासी त्रीन् अपि क्षणकालं परीक्षादृष्ट्या दृष्टवान् । ततः कमपि किमपि अनुक्त्वा एकैकस्मै एकैकं वस्तु दत्तवान् सः । एकस्मै तेन मृत्तिका दत्ता, अपरस्मै जलं दत्तं, तृतीयाय च धान्यं दत्तम् । ततः त्रयः अपि आश्रमतः प्रत्यागताः । एकैकोऽपि आत्मना आनीतं वस्तु वणिजे प्रदर्शितवान् ।

तेषां दर्शनात् मुनेः आशयः कः इति न ज्ञातं वणिजा । 'तत् ज्ञातुं बुद्धिमान् एव समर्थः, राज्ञः आस्थाने एव तादृशाः भवन्ति' इति निर्णीय सः तैः त्रिभिः सह राज्ञः आस्थानम् आगतवान् । स्वसमस्यां राजानं निवेद्य परिहारोपायं प्रार्थितवान् च ।

राजा तान् त्रीन् एव पृष्टवान् - ''मुनेः आशयः कः स्यात् ?'' इति ।

''महाराज ! मुनिवरेण मह्यं मृत्तिका दत्ता । मृत्तिका एव सर्वस्य आधारः । आधारं विना किं वा तिष्ठेत् लोके ? एवमेव मृत्तिकां विना जलेन धान्येन वा न किमपि प्रयोजनम् । अतः वणिजः पुत्रीं परिणेतुम् अर्हः अहम् एव इति मुनिवरेण सूचितं मृत्तिकादानेन'' इति उक्तवान् प्रथमः ।

ततः द्वितीयः अवदत् - ''भूमिः धान्यं च जलं विना न प्रयोजनाय । जलमेव जगतः आधारः । तादृशं श्रेष्ठं जलं मह्यं यच्छता



मुनिवरेण मम श्रेष्ठता ज्ञापिता । अतः एतस्य वणिजः पुत्रीं परिणेतुम् अहम् एव अर्हः इति तु निश्चितम् । एतत् एव ज्ञापितं मुनिवरेण मह्यं जलं यच्छता'' इति ।

एतदनन्तरं तृतीयः अवदत् - ''यदि धान्यम् एव न स्यात् तर्हि भूमिजलयोः सद्भावेऽपि किं वा फलं प्राप्येत ? ततः सस्यं तु न वर्धते । धान्यस्य पोषिके भूमिजले । धान्यम् एव प्रमुखम् । तत् मह्यं यच्छता मुनिवरेण मम अर्हता प्रमाणीकृता । अतः वणिजः पुत्रीं परिणेतुम् अर्हः अहम् एव, न अन्यः'' इति ।

तेषां त्रयाणाम् अपि वचनं युक्तियुक्तं तर्कसम्मतं च आसीत् । अतः एतेषु कः अर्हः इति निर्णेतुम् अशक्तः अभवत् राजा । तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः



'विश्वबन्धु-मणिभद्रयोः सामर्थ्यस्य परीक्षार्थम् अयम् एव योग्यः कालः' इति सः अचिन्तयत् । तौ तस्मिन् काले तत्रैव आस्ताम् अपि ।

राजा विश्वबन्धुं पश्यन् अपृच्छत् - "एतस्मिन् विषये भवतः आशयः कः ?" इति ।

"जलम् एव श्रेष्ठम् इति अहं भावयामि । जगताम् आधारः जलम् । तत् विना धान्यं भूमौ न वर्धते । जलाभावे भूमिः निष्फला, बीजं च व्यर्थम् । अतः जलप्राप्तिकर्ता एव श्रेष्ठः इति मम निर्णयः" इति अवदत् विश्वबन्धुः ।

"भोः, भवान् किम् अभिप्रैति एतस्मिन् विषये ?" इति मणिभद्रं पश्यन् पृष्टवान् राजा ।

"महाराज ! तेषां वस्तूनां परीक्षणं विना अहं किमपि वक्तुं न शक्नोमि" इति उक्तवान् मणिभद्रः । ततः तेन त्रयः अपि पदार्थाः परिशीलिताः सूक्ष्मेक्षिकया ।

तदनन्तरं तेन उक्तम् - "यस्मै मृत्तिका दत्ता सः एव वणिजः पुत्रीं परिणेतुम् अर्हः इति मुनिवरस्य आशयः" इति ।

किन्तु एतावता राजा न तृप्तः । सः अनन्तरदिने संन्यासिनम् एव राजास्थानं प्रति आनायितवान् ।

संन्यासी राजानम् अवदत् - "राजन् ! रत्नानि सदा विरलानि । भवतः आस्थाने तादृशं श्रेष्ठं रत्नम् अस्ति । तत् अभिजानातु आदौ । ततः भवतः, देशस्य च हितं भविष्यति" इति ।

राजा मार्तण्डदेवः क्षणकालं चिन्तितवान् । तावता मुनेः वचनस्य आशयः तेन स्पष्टतः ज्ञातः इव । अतः तस्य मुखे मन्दहासः उत्पन्नः । तस्य समस्या परिहृता आसीत् । सः योग्यम् एव आप्तसहायकस्थाने नियोजितवान् ।

एवं कथाम् उक्त्वा वेतालः त्रिविक्रमम् अवदत् - "अये राजन् ! संन्यासी कश्चन निगूढभाषी आसीत् । तस्य वचनस्य किं तात्पर्यम् ? तच्च तात्पर्यं राज्ञा कथम् अवगतम् ? राजा च कम् आप्तसहायकस्थाने नियोजितवान् ? तम् एव किमर्थं नियोजितवान् सः ? सर्वम् एतत् निगूढम् इव दृश्यते खलु ? एतस्य निगूढरहस्यस्य तात्पर्यं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति ।

अवदत् – ''राजा मार्तण्डदेवः महाबुद्धिमान् । यदा त्रयाणां युवकानां वचनानि श्रुतानि तदा निर्णये अस्पष्टता आसीत् तस्य इति तु सत्यम् । विश्वबन्धु-मणिभद्रयोः कथनस्य श्रवणात् तु सा अस्पष्टता इतोऽपि अधिकतया प्रवृद्धा इत्यपि सत्यमेव ।

मम पुत्र्याः निमित्तं योग्यं वरं मुनिवरः सूचयिष्यति एव इति वणिजः दृढविश्वासः आसीत् । मुनिवरः गूढतया भाषते इत्यपि सः जानाति स्म । गूढार्थस्य तात्पर्यं कथमपि ज्ञातं चेत् योग्यः वरः प्राप्तः इव इति चिन्तयन् सः समस्यां राजसमीपम् आनीतवान् । मुनीश्वरस्य वचने राज्ञः अपि विश्वासः आसीत् । गूढवचनं यदा श्रुतं तदा राजा किञ्चित् चिन्तितवान् । 'श्रेष्ठरत्नम्' इति वदन् मुनिः मणिभद्रम् एव सूचयन् अस्ति इति सः अवगतवान् । रत्नमण्योः अर्थसादृश्यस्य बलात् तेन तथा अवगतम् आसीत् । अतः मणिभद्रम् एव स्वस्य आप्तसहायकत्वेन नियुक्तवान् सः ।

मणिभद्रस्य निर्णयक्रमं परिशीलयाम । सः मृत्तिकां, जलं, धान्यं च परीक्षितवान् । आपाततः दर्शनात् त्रयाणाम् अपि समान-प्राधान्यं दृश्यते स्म । यदा परीक्षा कृता तदा धान्यजलयोः दोषपूर्णता मणिभद्रेण अवगता । जलं प्रायः दुर्गन्धयुक्तं मलिनं च आसीत् । धान्यम् अङ्कुरोत्पादनसमर्थं न आसीत् । किन्तु मृत्तिका च स्वच्छा सुगन्धयुक्ता च आसीत् । एतम् अंशम् अवलम्ब्य मणिभद्रः निर्णीतवान् यत् मृत्तिकां प्राप्तवान् एव योग्यः वरः इति । राजा एतत्सर्वं दृष्टवान् आसीत् एव । अतः मणिभद्रविषयकः पक्षपातः तस्मिन् गूढतया उत्पन्नः आसीत् । किन्तु मुनिः अपि गूढशैल्या यदा तदेव सूचितवान् तदा तस्य निर्णयः स्पष्टः अभवत् । अतः एव सः मणिभद्रम् एव आप्त-सहायकस्थाने नियुक्तवान्'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा वृक्षस्य शाखाम् अव-लम्बितवान् ।



# क्रिस्मस्



यदा डिसेम्बर्मासः उपस्थितः भवति तदा क्रिश्चियन्जनबहुले प्रदेशे श्रूयते- 'जिङ्गल् बेल्स्....'गीतस्य मधुरध्वनिः । क्रिस्मस्-उत्सवकाले सान्ताक्लूस्, उपायनानि, महाहरिणः, हिमप्रदेशे सञ्चरन् वृषभशकटः, केक्स्खाद्यानि इत्यादीनि सर्वाणि स्मृतिपथम् आयान्ति । डिसेम्बर्-मासस्य २५ तमः दिनाङ्कः येसुक्रिस्तस्य जन्मदिनम् । येसुक्रिस्तः एव क्रैस्तमतस्य संस्थापकः । तस्य जन्मदिने उत्सवः आचर्यते प्रपञ्चे सर्वत्रापि ।

क्रिस्मस् सद्भावस्य पर्व । सन्तोषसुखयोः अनुभवार्थं स्थितं पर्व तत् । भारतीयाः क्रिश्चियन्जनाः स्वप्रदेशस्य पद्धत्यनुगुणम् एतम् उत्सवम् आचरन्ति ।

उत्सवदिने सर्वाणि गृहाणि दीपेन अलङ्क्रियन्ते । दीपैः, नक्षत्रैः, अन्यैः अलङ्कारवस्तुभिः च अलङ्कृतः क्रिस्मस्-वृक्षः गृहाणाम् आपणानां च पुरतः प्रतिष्ठाप्यते । केषुचित् गृहेषु क्रिस्तस्य जीवनघटनाः अवलम्ब्य रचिताः पाञ्चालिकाः प्रदर्शनार्थं स्थाप्यन्ते ।

प्रतिगृहं स्फुटतया उद्भासमानं नक्षत्र-आकारकम् अलङ्कारवस्तु उत्तोल्यते । केषुचित् नगरेषु ग्रामेषु च एतस्य स्थापन-स्थलस्य औन्नत्यम् अवलम्ब्य स्पर्धा अपि भविष्यति । दक्षिणभारते जनाः वेणु-शलाकाभिः निर्मिते नक्षत्राकारके दीपं संस्थाप्य तत् गृहस्य पुरतः उत्तोलयन्ति ।

क्रिस्मस्पर्व निमित्तीकृत्य भजनप्रियाणां गणः गायन् प्रतिगृहं गच्छति क्वचित् ।

क्रिस्मस्सम्प्राप्तितः पूर्वं मध्यरात्रे प्रभाते च चर्च्तः सन्देशः प्रसार्यते । जनाः तत् श्रुत्वा मित्राणि बान्धवान् च मिलन्तः शुभाशयं कथयन्ति । परिवाराणां समावेशः, महा-भोजोत्सवः इत्यादयः उत्सवस्य अङ्गतया प्रचलन्ति । क्रिस्मस्केक्खाद्यं विना प्रायः क्रिस्मस्पर्व न समाप्तिम् एष्यति । फलादीनां रसेन निर्मितेन मद्यार्केण सह केक् खाद्यते ।

# निर्मीयतां क्रिस्मस्वृक्षः

क्रिस्मस्पर्व आसन्नम् अस्ति । सर्वत्र आनन्दतरङ्गाः दृश्यन्ते । उत्सवाचरणोत्साहः स्थाने स्थाने परिदृश्यते । एतम् उत्सवं निमित्तीकृत्य हस्तकौशलकलायां निपुणेन हस्तेन निर्मितेन वृक्षेण भवदीयं गृहम् अलङ्कुर्वन्तु । एतदर्थं साधनानि नाम – कर्तरी, दृढपत्राणि, संश्लेषकं च । वृक्षनिर्माणार्थम् अधस्तनसूचनाः अवधानपूर्वकम् अनुसरन्तु –

१. एतं पुटं दृढपत्रे संश्लेष्य तत् दृढपत्रम् चित्रानुगुणं कर्तयन्तु ।
२. चित्रे यथा दर्शितं तथा 'अ'चित्रस्य अधोभागे 'ब'चित्रस्य ऊर्ध्वभागे च विदारणं कुर्वन्तु ।
३. ततः 'ब'चित्रस्य विदारितभागे 'अ'चित्रस्य विदारितभागं योजयन्तु ।
४. वृक्षस्य ऊर्ध्वभागे नक्षत्राकारं योजयन्तु ।
५. ततः अलङ्कारं यथारुचि कुर्वन्तु वर्णमयगोलकादिभिः । एतदर्थं संश्लेषकस्य उपयोगं कुर्वन्तु ।

इदानीं सिद्धं खलु रमणीयः क्रिस्मस्वृक्षः ! एतत् नीत्वा सुन्दरतया प्रदर्शनपेटिकायाः अन्तः स्थापयन्तु ।


















# इद्-उल्-फर्



'इद् मुबारक्' इत्येतत् अभिनन्दनवचनं वयं सदा शृणुमः इद्-उल्-फर्दिने । एतत् 'रम्झान् इद्'नामकं पर्व मुस्लिमपर्वसु एव अतिविशिष्टम् । 'रमदान्'नामकस्य मुस्लिमीयमासस्य अन्तिमे भागे एतत् पर्व आचर्यते । रमदान्मासे नूतनः चन्द्रः यदा उदेति तदनन्तरदिने इद्पर्व आचर्यते । एतस्मिन् वर्षे इद्-उल्-फर्-पर्व भविष्यति डिसेम्बर्मासस्य १७ दिनाङ्के ।

एतस्मिन् मासे सर्वेषु अपि दिनेषु दिवासमये उपवासम् आचरन्ति मुस्लिमाः । सूर्योदयात् पूर्वम् आहारं सेवितवन्तः ते सूर्यास्तानन्तरं चन्द्रं दृष्ट्वा एव आहारं सेवन्ते । तन्मध्ये जलमपि न सेवन्ते ते ।

इद्दिने बान्धवान् मित्राणि च शुभाशयं वदन्ति ते । समग्रः जातिसमुदायः सम्भूय प्रार्थनां करोति । प्रार्थनार्थम् आगन्तारः बहवः इत्यतः विशाले क्रीडाङ्गणे एषः प्रार्थनाकार्यक्रमः प्रचलति ।

'खाजी'नामकः धर्मगुरुः पूजास्थले नायकत्वं वहति । प्रार्थनानन्तरं सः उद्बोधकभाषणं करोति । उपवासः, बन्धुमित्रैः सह मेलनम् इत्यादयः उत्सवस्य विशेषाः भवन्ति ।

इद्पर्वदिने सर्वे मुस्लिमाः दरिद्रेभ्यः किमपि यच्छन्ति एव । धनधान्यफलादिकं यत् अर्जितं तस्य कञ्चन भागं दानरूपेण यच्छन्ति ते । दानं कृत्वा एव प्रार्थनासभां प्रति गन्तव्यम् एकैकेन अपि ।

शियामुस्लिमानां कृते रमदानमासस्य एकविंशतितमं द्वाविंशतितमं च दिनं पवित्रतमम् । धर्मप्रवर्तकस्य मोहम्मदस्य जामातुः आलिनामकस्य पुण्यदिनं तत् ।

पवित्रः कुरान्ग्रन्थः एतस्मिन् एव दिने स्वर्गात् भूलोकम् आगतः इति मुस्लिमानां विश्वासः । पवित्रमासस्य अन्तिमेषु दशसु दिनेषु कदाचित् पवित्रः कुरान्ग्रन्थः अदृश्यतां गतः इति ते भावयन्ति । एतानि दिनानि 'लैलुद्-उल्-कदर्' इति निर्दिश्यन्ते । 'प्रकाशीयरात्रयः' इति तस्य पदस्य अर्थः । पवित्रस्य कुरान्ग्रन्थस्य स्फुरणं कदा भवति इति अल्लाहः(देवः) धर्मप्रवर्तकश्चापि जानीतः, न अन्ये इति मुस्लिमाः भावयन्ति ।

# कार्तिकै



'कार्तिकै' पदस्य अर्थः दीपोत्सवः इति । एषः उत्सवः आचर्यते तमिळुनाडु-राज्ये ।

कार्त्तिकमासे एषः उत्सवः आचर्यते । एतस्मिन् वर्षे एषः उत्सवः भविष्यति नवम्बर्मासस्य ३० दिनाङ्के । त्रिदिनात्मकः एषः उत्सवः ।

शिवः पञ्चभूतात्मकतया विभक्तः सन् तमिळुनाडुराज्ये निवसति इति जनानां विश्वासः । तस्य शिवस्य आराधनार्थम् अयम् उत्सवः ।

तिरुवण्णामलैप्रदेशे स्थिते अरुणाचले शिवः पञ्चभूतेषु अन्यतमस्य अग्नेः रूपेण तिष्ठति इति जनाः भावयन्ति । प्रतिवर्षं कार्त्तिकमासे भरणीनक्षत्रं यदा उदेति तदा अत्र पर्वतशिखरे दीपः प्रज्वाल्यते ।

'वर्षाकालसमाप्तिं द्योतयति अयम् उत्सवः' इत्यपि श्रूयते ।

यदा कार्त्तिकमासस्य आरम्भः तदा गृहिण्यः देहल्याः पुरतः मृद्दीपं ज्वालयन्ति । यस्मिन् दिने तिरुवण्णामलैप्रदेशे पर्वते श्रेष्ठदीपः ज्वाल्यते तस्मिन् दिने सर्वेषु तमिळुगृहेषु विशेषपूजा प्रचलति । गृहं परितः देहल्यां च मृद्दीपानां पङ्क्तिः आरच्यते ।

तण्डुलपिष्टं, गुडं, घृतं च मिश्रीकृत्य निर्मितं दीपम् उत्सवदिने प्रातः ज्वालयन्ति प्रतिगृहम् । शिवसम्बद्धानि गीतानि अपि गीयन्ते । पारम्परिकपद्धत्या शिवः पूज्यते च । दीपावलीनिमित्तम् आनीतासु स्फोटिकासु अवशिष्टाः एतदवसरे आनन्देन स्फोटयन्ति बालाः ।



# उत्तमकार्यस्य सत्फलम्

पूर्व महाराष्ट्रराज्ये खेडगाँव्नामकः ग्रामः आसीत् । तत्र सन्दीपः नाम बालकः वसति स्म । सः अन्धः । किन्तु तस्य स्वभावः उत्तमः । अतः ग्रामस्य सर्वे जनाः तस्मिन् प्रीतिं दर्शयन्ति स्म । किन्तु तदीयः पिता तस्मिन् कुप्यति स्म । ''अन्धस्य भवतः स्थित्या मम किम् ? कस्यापि कार्यस्य करणे तु भवान् असमर्थः । यदि भवान् इतः निर्गच्छेत् तर्हि एकस्य उदरस्य पोषणकार्यं वा न्यूनं भवेत् । अतः इतः निर्गच्छतु भवान् । भिक्षया उदरं पूरयतु'' इति उक्त्वा पुत्रं गृहात् निष्कासितवान् सः ।



सन्दीपः गृहात् निर्गतः । विशाले जगति एकाकी सः । तदीया शुनकी मोती एका एव तस्य सहायिका । मार्गपार्श्वे उपविश्य गानेन अल्पं धनं सम्पादयति स्म सन्दीपः । तदेव तयोः उदरपूरणस्य आधारः । एवम् एव पञ्च वर्षाणि गतानि । गृहात् सुदूरं गतौ तौ ।

एकस्मिन् सायङ्काले नितरां श्रान्तौ सन्दीपः मोती च कस्यचित् मन्दिरस्य पुरतः स्थितवन्तौ । आदिनं परिश्रमं कृत्वापि अल्पः एव आहारः प्राप्तः आसीत् ताभ्याम् । ''मोति ! भोजनात् पूर्वम् अहम् अल्पां विश्रान्तिम् इच्छामि । एतस्मात् आन्ध्यजीवनात् अहं नितरां जुगुप्सितः अस्मि । धिक् मम असहायकताम्'' इति अवदत् सन्दीपः । अनुकम्पां दर्शयन्ती मोती पुच्छं चालितवती । तदीयं पादं जिह्वया लीढवती च । सन्दीपः निद्रामग्नः जातः ।

निद्रायां तेन कश्चन स्वप्नः दृष्टः । काचित् सुन्दरी देवता तस्य पुरतः प्रत्यक्षीभूय - ''सन्दीप ! सन्दीप ! किं मां द्रष्टुं शक्नोति भवान् ?'' इति पृष्टवती ।

''अहम् अन्धः अस्मि खलु ? कथम् अहं भवतीं द्रष्टुं शक्नुयाम् ?'' इति पृष्टवान् सन्दीपः ।

''सन्दीप ! अलं खेदेन । अहं भवतः साहाय्यं करोमि । यथा यथा भवान् उत्तमं कार्यं करोति तथा तथा भवता दृष्टिशक्तिः प्राप्यते । किन्तु यदि अनुत्तमं कार्यं

क्रियते तर्हि प्राप्ता अपि दृष्टिशक्तिः लुप्ता भविष्यति । एतम् अंशं मनसि निधाय व्यवहरतु'' इति उक्तवती सा देवता । ततः सा अदृश्यतां गता ।

ततः सन्दीपः जागरितः । मोती अपि उत्साहेन तं परितः अटितवती । ''मोति ! इदानीं खादाव । श्वस्तनं दिनम् उत्तमं स्यात् आवयोः'' इति उक्तवान् सन्दीपः ।



पूर्वदिनस्य स्वप्नं स्मरन् एव उत्थितवान् सन्दीपः । ''यदि अहम् एतं प्रपञ्चं द्रष्टुं शक्नुयां तर्हि अहो, कियत् उत्तमं स्यात्'' इति स्वगतम् उक्तवान् सः । प्रपञ्चदर्शनकल्पना एव तस्मिन् रोमाञ्चम् अजनयत् । सः मोत्या सह प्रस्थितवान् ।

मध्येमार्गं कश्चन अन्धः वृद्धः भिक्षुकः मिलितः । सः प्रार्थितवान् – ''अहम् अन्धः वृद्धः भिक्षुकः अस्मि । कृपया किमपि यच्छन्तु'' इति ।

''अहम् अपि अन्धः दरिद्रः च । किं अहं दद्याम् ?'' इति पृष्टवान् सन्दीपः ।

''किन्तु भवान् न वृद्धः, न वा पङ्गुः । अतः किमपि सम्पादयितुं शक्नुयात् एव'' इति अवदत् वृद्धः ।

एतत् श्रुत्वा अनुकम्पां प्राप्तवान् सन्दीपः तस्मै वृद्धाय एकं रूप्यकं दत्तवान् । वृद्धः धन्यवादपुरस्सरं तत् स्वीकृतवान् ।

अनन्तरक्षणे एव सन्दीपेन अल्पा दृष्टिशक्तिः प्राप्ता इव । सः नितरां सन्तुष्टः । नेत्रे पुनः पुनः उन्मील्य निमील्य च सः दृष्टिप्राप्तिं दृढीकृतवान् । अन्धकारः पूर्ववत् गाढः इव न दृश्यते स्म इदानीम् । ''मोति ! मोति ! मम स्वप्नः अवितथः जातः । मम अन्धता किञ्चिदिव अपगता'' इति आनन्देन उक्तवान् सन्दीपः । मोती तं परितः अटन्ती लघुभषणं कुर्वती आनन्दं प्रकटितवती ।

तद्दिने रात्रौ काचित् वृद्धा खादनार्थम् आहारं प्रार्थितवती । सन्दीपः आत्मनः खादनार्थं यां रोटिकां रक्षितवान् आसीत् ताम् एव निस्सङ्कोचं तस्यै दत्तवान् । सा वृद्धा आनन्दाश्रूणि स्रावयन्ती तां रोटिकां स्वीकृतवती । तदा सन्दीपस्य दृष्टिशक्तिः पुनरपि किञ्चित् प्रवृद्धा । ''किं रात्रौ चन्द्रोदयः भविष्यति ?'' इति तां वृद्धां पृष्टवान् सन्दीपः । ''इदानीम् एव चन्द्रः उदितः अस्ति'' इति उक्तवती वृद्धा । ''अहम् अपि चन्द्रं किञ्चिदिव द्रष्टुं शक्नोमि'' इति आनन्देन उक्तवान् सन्दीपः ।

अनन्तरदिने यदा उत्थितं तदा महती बुभुक्षा

आगच्छतु, इदानीम् एतस्य प्रायश्चित्तं करणीयम् आवाभ्याम्'' इति खेदेन वदन् सन्दीपः तत् स्थलं प्राप्तवान्, यत्र च कुक्कुटः प्राप्तः आसीत् । कस्यापि कुक्कुटः नष्टः वा इति जनान् पृष्टवन्तौ तौ ।

''आम् । कश्चन निर्धनः स्वस्य एकं कुक्कुटम् अपश्यन् खिन्नः अस्ति'' इति अवदत् कश्चित् ।

''मम शुनकी अज्ञानेन कञ्चित् कुक्कुटम् अमारयत् । तस्य विक्रयणेन प्राप्तं धनम् एतत् । एतत् तस्मै कुक्कुटस्वामिने ददातु'' इति वदन् तस्मै धनं दत्तवान् सन्दीपः ।



बाधते स्म सन्दीपं मोतीं च । यतः गतरात्रौ तयोः भोजनं न आसीत् । ''मोति ! गच्छाव, कुत्रापि आहारः प्राप्येत वा इति पश्याव'' इति अवदत् सन्दीपः ।

ततः तौ मार्गे गतौ । तावता कश्चन कुक्कुटः मार्गम् आगतः । मोती कुक्कुटम् अनुसृत्य गत्वा तं मारयित्वा मुखेन गृहीत्वा आनयत् । एतत् ज्ञात्वा सन्दीपः नितरां सन्तुष्टः । ''मोति ! एतं विपण्यां विक्रीय प्राप्तेन धनेन किमपि क्रीणामि'' इति वदन् सन्दीपः मोत्या सह विपणिं गत्वा कुक्कुटं विक्रीतवान् । ततः अधिकम् एव धनं प्राप्तं तेन ।

धनप्राप्त्या यावत् तौ सन्तोषम् अनुभवन्तौ आस्तां तावता सन्दीपस्य दृष्टिशक्तिः क्षीणा जाता । ''मोति ! मया प्राप्ता दृष्टिशक्तिः पुनः विलुप्ता । यत् अस्मदीयं न तस्य विक्रयणं कुर्वद्भ्याम् आवाभ्याम् अनुचितं कृतम् ।

अनन्तरक्षणे एव दृष्टिशक्तौ अल्पः परिष्कारः जातः । एतस्मात् आनन्दितः सन्दीपः बुभुक्षाम् एव विस्मृतवान् ।

अनन्तरदिनेषु सन्दीपः बहूनि उत्तम-कार्याणि कृतवान् । तस्य परिणामतः तस्य दृष्टिशक्तिः उत्तमा जाता । इदानीं सः वस्तूनि अभिज्ञातुं शक्नोति स्म दिवाकाले ।

एकदा तौ नदीतीरे गच्छन्तौ आस्ताम् । ''मोति ! इदानीं मम दृष्टिशक्तिः क्रमेण वर्धमाना अस्ति । दैवानुग्रहात् एतत् सम्पन्नम् । भवती मम उत्तमं मित्रं मार्गदर्शकः च'' इति वदन् प्रीत्या शुनक्याः शिरः स्पृशन् आसीत् सन्दीपः । तावता कश्चन क्रन्दनध्वनिः श्रुतः । नद्यां मज्जन् कश्चन साहाय्यं प्रार्थयमानः आसीत् उच्चैः । सन्दीपः तस्य साहाय्यं कर्तुम् इच्छति । किन्तु दृष्टिशक्तिः पूर्णतः न प्राप्ता इत्यतः भीतिः तस्य । मोती तु तरणकुशला ।

किन्तु तस्याः अपायः कोऽपि जातः चेत् .. इति भीतिः । क्रन्दनध्वनिः पुनरपि श्रुतः । अन्ते सन्दीपः मनः दृढीकृत्य मोतीम् आदिशत् – ''मोति ! रक्षतु तम्'' इति । मोती नदीजले न्यपतत् ।

नद्यां पतितः जनः तीरं प्राप्तवान् । सन्दीपः तस्य समीपं गत्वा अवदत् – ''भवान् कुशली खलु ? मम शुनकी क्व ?'' इति ।

''मित्र ! भवतः शुनक्या मम प्राणाः रक्षिताः । किन्तु तां रक्षितुम् अहम् अशक्तः'' इति खेदेन दीर्घं निश्श्वसन् उक्तवान् सः जनः ।

तदा सन्दीपः अश्रूणि स्रावयन् उच्चैः क्रन्दितवान् – ''मोति ! मोति ! क्व गता भवती ? भवतीं विना कथम् अहं जीवेयम् ?'' इति ।

तदा सः पुरुषः सन्दीपस्य स्कन्धे प्रीत्या हस्तं स्थापयन् अवदत् – ''अलं रोदनेन । भवतः पितरम् उक्त्वा अन्यं शुनकं दापयामि । खेदः मास्तु'' इति ।

''तत् सौभाग्यं कुत्र मम ? मम पिता पञ्चभ्यः वर्षेभ्यः पूर्वम् एव मम आन्ध्यं दृष्ट्वा खिन्नः सन् मां गृहतः निष्कासितवान्'' इति महता खेदेन उक्तवान् सन्दीपः ।

एतत् श्रुत्वा सः पुरुषः सन्दीपं क्षणकालम् आश्चर्येण दृष्ट्वा अपृच्छत् – ''किं भवान् सन्दीपः ? मम सन्दीपः ?'' इति ।

सन्दीपः तं सम्यक् दृष्टवान् । सः आसीत् तदीयः पिता एव । सन्दीपः इदानीं स्पष्टतया पितरं द्रष्टुं शक्नोति स्म । तस्य आन्ध्यं पूर्णतः अपगतम् आसीत् ।

पिता सन्दीपं प्रेम्णा पश्यन् अवदत् – ''वत्स ! सन्दीप ! मया अविवेकेन अपराधः कृतः आसीत् । क्षन्तव्यः अहम् । वत्स ! गृहम् आगच्छतु । भवतः आन्ध्यस्य निवारणार्थं चिकित्सां कारयिष्यामि'' इति ।

सन्दीपः पितरं निर्निमेषं पश्यन् आसीत् । एतत् दृष्ट्वा पिता आश्चर्येण अपृच्छत् – ''सन्दीप ! अपि भवान् द्रष्टुं समर्थः ? कथम् एतत् सिद्धम् ?'' इति ।



सन्दीपः प्रवृत्तं सर्वं श्रावितवान् । ततः तौ आनन्देन गृहं प्रति प्रस्थितवन्तौ ।

पिता सन्दीपाय अपरं शुनकं दापितवान् । तस्य नाम निश्चितवान् सन्दीपः – 'मित्री' इति । किन्तु तेन मोती कदापि न विस्मृता । मोत्याः कारणात् एव तेन सम्पूर्णदृष्टिशक्तिः प्राप्ता आसीत् ।

# बुद्धिमान् गोपालबन्धुः



गोपालबन्धुः राज्ञः कृष्णचन्द्रस्य आस्थाने विदूषकः आसीत् । कदाचित् म्लानमुखः राजा तेन लक्षितः । कारणं पृष्टः राजा अवदत् - "नवाबः मम खेदस्य कारणम् ।" "समस्यां मां वदतु । ताम् अहं परिहरिष्यामि" इति अवदत् गोपालः ।



"भूमेः दैर्घ्यं मातव्यम्, आकाशस्थानि नक्षत्राणि च गणनीयानि इति नवाबः माम् आदिष्टवान् अस्ति" इति अवदत् राजा । "एतदुभयम् अपि असाध्यं न । एतदर्थं लक्षं रूप्यकाणि वर्षात्मकं कालावधिं च याचतु" इति असूचयत् गोपालः ।



राजा नवाबस्य पुरतः स्वस्य अपेक्षाम् उपस्थापितवान् । "लक्षं रूप्यकाणि तु दीयन्ते । वर्षात्मकः कालावधिः किमर्थम् ?" - नवाबः अपृच्छत् । "भूमेः मापनं तु अहोरात्रं कर्तुं शक्यते । किन्तु नक्षत्राणि रात्रौ एव गणनीयानि खलु ? तदर्थं तावान् अवधिः आवश्यकः" - राजा अवदत् ।



राजा लक्षं रूप्यकाणि गोपालाय दत्त्वा पृष्टवान् - "वस्तुतः अपि वर्षाभ्यन्तरे तत् कार्यं करिष्यते खलु भवता ?" इति । "भवान् चिन्तां मा करोतु । वर्षानन्तरम् अहम् आगमिष्यामि" इति उक्त्वा ततः निर्गतवान् गोपालः ।



एकं वर्षम् आनन्देन यापितवान् सः । जनाः तं पृच्छन्ति स्म – ''राजास्थानं प्रति गमनं नास्ति किम् ?'' इति । गोपालः वदति स्म – ''राजा मह्यं विशेषकार्यं दत्तवान् अस्ति । तस्य समाप्तिपर्यन्तं मया आस्थानं प्रति गन्तव्यं नास्ति'' इति ।

वर्षावधिः यदा समाप्तः तदा गोपालः राजानं दृष्टवान्, ''कार्यं समाप्तं महाराज'' इति उक्तवान् च । ''किं भूमेः दैर्घ्यं दृष्टम् ? किं नक्षत्राणि गणितानि ?'' राजा अपृच्छत् । ''आम् ! श्वः नवाबसमीपं गच्छाव'' इति उक्तवान् गोपालः ।







अनन्तरदिने राजा नवाबस्य आस्थानं प्रति प्रस्थितः । गोपालः तम् अनुसृतवान् । दशशाकटमितानि जालानि अपि नीतानि । दश मेषाश्च नीताः ।

''एषः गोपालः मत्प्रतिनिधित्वेन भवदुक्तं कार्यं कृतवान्'' इति नवाबम् उक्तवान् राजा । ''अस्तु, गणनां वदतु'' इति उक्तवान् नवाबः । ''जालानां रज्जुः यावद्दीर्घा तावदेव दैर्घ्यं भूमेः । मेषाणां शरीरे यावन्ति रोमाणि तावन्ति एव नक्षत्राणि लोके'' इति अवदत् गोपालः । नवाबः राजा च एतत् श्रुत्वा आश्चर्येण स्तब्धौ ।



भारतीयः साम्प्रदायिकः नृत्यप्रकारः

# अनुपमं मणिपुरीयनृत्यम्



मणिपुरे नृत्यम् अपि जीवनस्य अविभाज्यम् अङ्गम् । मणिपुरम् इत्यस्य शब्दस्य अर्थः 'रत्नानां नगरी' इति । पूर्वम् एतत् नगरं गन्धर्वाणां विद्याधरादीनां वा वासभूमिः आसीत् इति श्रूयते । तत्कारणतः एव स्यात् मणिपुरीयाणां सर्वेषाम् अपि नृत्ये अत्यासक्तिः । मणिपुरीयनृत्यं मणिपुर-राज्यम् इव एव परमसुन्दरम् । भारतस्य उत्तरपूर्वीयभागे पर्वतानां मध्ये स्थितस्य मणिपुरस्य सौन्दर्यं वर्णनातीतम् ।

मणिपुरीयनृत्ये चीनादेशस्य प्रभावः स्फुटतया दृश्यते । सप्तमे क्रिस्तशके चीनादेशीयाः अत्र आक्रमणं कृत्वा वासं कृतवन्तः । स्थानीयजनाः तैः परिणीताः अपि । तत्कारणतः नूतना इण्डो-मङ्गोलियन्‌जनजातिः एव निर्मिता अभवत् ।

एषः नृत्यप्रकारः अतिप्राचीनः । विंशतिशतकस्य पूर्वार्धे प्रसिद्धः बङ्गालीयः कविः रविन्द्रनाथठागोरः समग्रे देशे एतस्य नृत्यप्रकारस्य जन-प्रियतां कल्पितवान् । १९२० तमे वर्षे मच्चिमपुरे तेन ऐदम्प्राथम्येन एतत् नृत्यं



दृष्टम् । ततः सः नितराम् आकृष्टः ।

तदनन्तरकाले कलाशिक्षणार्थम् एव संस्थापितस्य शान्तिनिकेतनस्य नृत्यपाठ्यक्रमे मणिपुरीयनृत्यप्रकारम् अपि योजितवान् सः ।

मणिपुरीयनृत्यस्य जानपदीयः, साम्प्रदायिकः, आधुनिकः च प्रकारः समग्रतया निसर्गसम्बद्धः । मणिपुरीयनृत्यप्रकारेषु प्रसिद्धेषु अन्यतमः अस्ति 'रासः' । सः राधाकृष्णयोः प्रेमजीवनकथाम् अवलम्बते ।

मणिपुरीयनृत्यम् एकव्यक्तिप्रदर्शनयोग्यं यथा, तथैव सामूहिकम् अपि । 'दोलयात्रा' 'होलीपर्व' इत्यादिषु प्रसङ्गेषु सामूहिकनृत्यं क्रियते तत्रत्यैः । एतादृशेषु नृत्येषु महिलाः पुरुषाः चापि सोत्साहं भागं वहन्ति ।

'राखुवल्'नामकं नृत्यं पुरुषैः एव प्रदर्श्यते । कृष्णः स्वस्य अनुचरैः सह यत् व्यवहृतवान् तां कथाम् अवलम्बते तत् । वर्णमयः वेषः नृत्यस्य सवेगगतिं भूषयति । 'लै-हरौबा' इत्येतत् अपरं सामूहिकं नृत्यम् । यथा प्रेमसम्बन्धिनी लैलामजनूकथा, हीररञ्जाकथा च सुप्रसिद्धा तथैव 'खम्बा-तोयबी'कथा अत्र प्रसिद्धा । सा एतस्मिन् नृत्ये प्रदर्श्यते ।

पुरुषैः प्रदर्श्यमानं मणिपुरीयनृत्यं वेगयुक्तम्, उपवेशनोत्थानादि-अङ्गचालनयुक्तं च । 'खोल'नामकस्य वाद्यस्य ध्वनेः अनुगुणं तेषां नृत्यकाराणां पदानां निवेशः भवति ।

एतानि नृत्यानि प्रायः मधुरगानेन सहैव भवन्ति । 'खोल'नामकं वाद्यं प्रायः सर्वेषु नृत्येषु उपयुज्यते । 'एकतारा' यथा तथैव एकतन्त्रीयुक्तम् अपरं वाद्यम् अपि अत्र उपयुज्यते । एतयोः उपयोगतः तालवैविध्यम् उत्पद्यते । परमोच्चनीचतालभेदः, तारमन्द्रस्वरभेदः इत्यादयः महता वेगेन यत् परिवर्तन्ते तत् द्रष्टृषु महान्तम् आनन्दम् उत्साहं च जनयति । मणिपुरीयनृत्यकाराः (पुरुषाः) कदाचित् खोलवाद्यं खञ्जनीवाद्यं च स्वयं गृह्णन्ति नृत्यावसरे ।

# उत्कलीया जानपदकथा

## तेषां वासः

उत्कलमूलजातीयाः बिहारः, मध्यप्रदेशः, छत्तीसगढः, झारखण्डः, ओरिस्सा, महाराष्ट्रम् इत्यादिषु बहुषु मध्यभारतीयराज्येषु निवसन्ति । एवं हि श्रूयते – 'दक्षिणभारते पूर्वं कोङ्कणजातीयाः आसन् । जनसङ्ख्या-वृद्धिकारणतः ते उत्तरभारतं प्रति गताः । सहस्राधिकवर्षेभ्यः पूर्वम् एषा घटना प्रवृत्ता' इति ।

द्राविडपरम्परायाः प्रमुखजातिषु अन्यतमा अस्ति उत्कलजातिः इति भाव्यते ।

## शृगालस्य न्यायनिर्णयः

जीतुः कश्चन उत्कलमूलीयः । सः मुखवायुना ध्वनिम् उत्पादयन् नदीतीरे स्थिते अरण्ये गच्छन् आसीत् । नद्याः अपरतीरे स्थिते '*बस्ती*' इत्यत्र तदीयं श्वशुर-गृहम् अस्ति । तस्य पत्नी कर्मी, बालः पुत्रः च इतःपूर्वम् एव तत्र गतौ आस्ताम् । श्वशुरगृहस्य बालस्य निमित्तम् आयोज्य-मानस्य 'छठी'कार्यक्रमस्य निमित्तं गच्छन् आसीत् सः । अरण्ये इतस्ततः दृष्टिं प्रसारयन् गच्छन् आसीत् सः । तदा एकस्मात् गुल्मात् गच्छन् कश्चन कूर्मः तेन दृष्टः ।



'अहो, अद्य सुदैवम्' इति स्वगतं वदन् तं कूर्मं ग्रहीतुम् उद्युक्तः अभवत् जीतुः । तम् उन्नेतुं समग्रं बलम् उपयोक्तव्यम् अभवत् । एतस्मिन् प्रयत्ने सः स्विन्नः अपि । 'इदानीं श्वशुरगृहं गच्छन् अहं रिक्तहस्तः नास्मि । अतः निस्सङ्कोचं तत्र गन्तुम् अर्हामि' इति सः अचिन्तयत् ।

नदीपर्यन्तम् एव तस्य वसतिक्षेत्रस्य सीमा । वसतिसीमायां सुन्दराः *'सर्ण'* वृक्षाः सन्ति । तेषां वृक्षाणां मध्ये अस्ति आराध्यदेवस्य *'सर्णबुर्हिया'* मूर्तिः । अग्रे गमनात् पूर्वं तस्यै मूर्त्यै श्रद्धया नमस्कारं समर्पितवान् जीतुः ।

यदा तेन नदी दृष्टा तदा तस्य हृदये कम्पः आरब्धः । नदी पूर्णप्रवाहयुक्ता आसीत् । 'मया अद्य कथं वा श्वशुरगृहं प्राप्तुं शक्येत ?' इति अचिन्तयत् सः ।

वस्तुतः नदी न अतिगभीरा । सामान्यदिनेषु सर्वे पादाभ्याम् एव नदीं क्रामन्ति स्म । अतः नदीक्रमणार्थं सेत्वादिकं न निर्मितम् आसीत् । 'किं करणीयम्' इति सः किञ्चित् अचिन्तयत् । कश्चन उपायः तस्य मनसि स्फुरितः । तस्य दृष्टिः कूर्मे पतिता ।

जीतुः स्नेहपूर्णेन स्वरेण कूर्मम् अपृच्छत् – ''मित्र ! किं भवान् मां नद्याः अपरतीरं प्रापयितुं शक्नुयात् ? नद्यां प्रवाहः अधिकतया दृश्यते । अहं पादाभ्यां तां क्रमितुं न शक्नोमि'' इति ।

'अहो, एते मानवाः कथं क्षणाभ्यन्तरे एव स्वव्यवहारे परिवर्तनं दर्शयन्ति ! एतेषु कदापि विश्वासः न करणीयः । किन्तु एतस्मात् स्वस्य रक्षणार्थं कश्चन अवकाशः लब्धः अस्ति इदानीम् । अतः एतेन उक्तस्य कार्यस्य करणे एव मम लाभः' इति सः अचिन्तयत् ।

''अस्तु, भवता उक्तं कार्यं करिष्यामि । प्रतिफलरूपेण भवता अपि मम साहाय्यं करणीयम् । अपरतीरं यदा प्राप्यते तदा मम बन्धनं न करणीयं पुनरपि । किम् एतत् अङ्गीक्रियते भवता ?'' इति अपृच्छत् कूर्मः । जीतोः अन्या गतिः न आसीत् । अतः सः

## तेषां भाषा

वस्तुतः उत्कलमूलजातीयानां भाषा 'कुरुख'नामिका । किन्तु गच्छता कालेन विविधभाषाणां प्रभावः तेषां भाषायाः उपरि जातः । अन्यभाषासम्मिश्रणम् अपि जातम् । अतः अद्य तैः भाष्यमाणायाः भाषायाः नाम अस्ति – *'सद्रि'* इति ।





## तेषाम् आकारः

एतज्जातीयानां पुरुषाणाम् औन्नत्यं मध्यम-प्रमाणकम् । कृष्णम् अविस्तृतं च शिरः । दीर्घा नासिका । दृढं शरीरम् । महिलानां मुखस्य अवयवाः पार्थक्येन भासन्ते, येन च नृत्यसमये भावाभिव्यञ्जनं स्फुटं भवति ।

एतं प्रस्तावम् अङ्गीकृतवान् ।

''अहं भवन्तं न वञ्चयामि सर्वथा । अपरं तीरं यदा प्राप्यते तदा भवान् स्वोद्दिष्टस्थलं गच्छतु । अहम् अपि मम मार्गम् अनुसरामि'' इति अवदत् जीतुः ।

एतस्मात् सन्तुष्टः अभवत् कूर्मः । जीतुः तं जले अस्थापयत् । कूर्मः प्लवनम् आरब्धवान् । जीतुः तस्य पृष्ठे उपाविशत् । अचिरात् एव ताभ्याम् अपरं तीरं प्राप्तम् ।

यदा कूर्मः नदीजले अदृश्यतां गतः तदा जीतुः अचिन्तयत् – 'कदाचित् वा अहम् एतस्य मांसस्य रुचेः आस्वादनं करिष्यामि एव' इति ।

श्वशुरगृहे महता सन्तोषेण कालं यापितवान् जीतुः । प्रियाणि भक्ष्याणि एव तेन प्राप्तानि तत्र । लवणमरीचिकासहिताः भृष्टाः मीनाः *'हरिया'* *'महुवा'* च तेन प्राप्ताः । सः तस्य बान्धवाः च गानेन नृत्येन च समग्रां रात्रिम् महता सन्तोषेण यापितवन्तः । *'मन्देर'* वाद्यस्य *'लोहातिनगेरा'* वाद्यस्य च अनुगुणं भूरि नृत्यं कृतम् । कर्मीप्रभृतयः महिलाः *'नागरी'*-मृत्तिकया स्नात्वा आभरणानि च धृत्वा विराजमानाः आसन् ।

जीतोः प्रत्यागमनकालः सन्निहितः । तस्य पत्नी पुत्रः च उक्तवन्तौ यत् इतोऽपि किञ्चित्कालम् अत्र स्थास्यावः इति । अतः जीतुना एकाकिना एव प्रतिगन्तव्यम् आपतितम् । जीतुः आनन्देन पदानि स्थापयन् अधस्तनं श्लोकं गायति स्म –

*ग्रीष्मे भवन्ति तरवो बहवश्च दग्धाः*
*तस्मात् त्यजन्ति सकला विहगा अरण्यम्*
*वर्षन्ति कृष्णजलदाः, तरवः फलन्ति*
*आयान्ति सर्वविहगा, वनमेति शोभाम् ।।*

इति ।

यदा तेन नदीतीरं प्राप्तं तदा दृष्टं यत् प्रवाहवेगः इतोऽपि न उपशान्तः इति । इदानीं किं करणीयम् इति यावत् सः चिन्तयन् आसीत् तावता तेन सः एव कूर्मः दृष्टः, यश्च पूर्वं तम् एतत् तीरम् आनीतवान् आसीत् ।

''अये, मित्र ! अपि कुशलम् ? दैवनिर्णयः अतिविचित्रः । अतः एव आवाम् एवं पुनः पुनः मिलन्तौ स्वः । एवं ननु ?'' इति अपृच्छत् जीतुः ।

'एषः ध्वनिः कुत्रापि श्रुतपूर्वः इव भाति



खलु ?' इति चिन्तयन् कूर्मः तीरस्य दिशि दृष्टिं प्रसारितवान् । तत्र आसीत् जीतुः ।

''अये, भवान् !'' इति आश्चर्येण अवदत् कूर्मः ।

''आम्, अहं जीतुः । मां तत् तीरं प्रापयति खलु भवान् ?'' इति विश्वासेन अपृच्छत् जीतुः । कूर्मः सन्तोषेण एव एतत् कार्यम् अङ्गयकरोत् । ततः विना वचनं तयोः प्रयाणम् आरब्धं नद्याम् । यदा नदीमध्यं प्राप्तं तदा कूर्मः जीतुम् अपृच्छत् – ''किं चिन्तयन् अस्ति भवान् ?'' इति ।

'यः नद्यां स्थित्वा असत्यं वदति तस्य महत् अहितं भविष्यति' इति उत्कलमूल-जातीयानां विश्वासः आसीत् । अतः जीतुः स्वस्य मनसि स्थितं विचारम् अवदत् – ''अद्य अहं भवन्तं गृहं नीत्वा खादितुम् अर्हामि, यतः मया किमपि वचनं तु न दत्तम् इति चिन्तयन् आसम्'' इति ।

''भवन्तः मानवाः एवम् एव कृतघ्नताम् आचरन्ति इति अहं जानामि । भवान् एवम् एवह कुर्यात् इति निरीक्षितम् अपि आसीत् मया । तदस्तु, मया किं चिन्त्यते इति किं भवान् जानाति ?'' इति अपृच्छत् कूर्मः ।

''किं चिन्त्यते भवता ?'' – अपृच्छत् जीतुः ।

''अद्य अहं भवन्तं नद्यां पातयिष्यामि । अपरतीरं प्रापयिष्यामि एव इति मयापि वचनं न दत्तं खलु अद्य'' इति अवदत् कूर्मः ।

''मां मा पातयतु कृपया । अहं तरणम् अपि न जानामि'' इति दैन्येन अवदत् जीतुः ।

''यः मम मारणं चिन्तयति तं नद्यां पातयामि चेत् को दोषः ?'' इति अपृच्छत्

## तेषां वृत्तयः

उत्कलमूलवासिनः वृत्त्या कृषिकाः प्राधान्येन । ते विविधसस्यानाम् औषधीय-गुणान् विषयुक्ततां च जानन्ति । मृगया तेषाम् अपरः प्रमुखः व्यापारः । केचन कृषिः मृगया चेति उभयम् अपि कुर्वन्ति ।



कूर्मः ।

तावता भीतेन जीतुना अपरतीरे शयानः शृगालः दृष्टः ।

''अयं विवादः आवाभ्यां परिहर्तुं न शक्यते । अतः तीरस्थं शृगालं निर्णायकं



करवाम । सः यथा वदति तथा भवतु'' इति अवदत् जीतुः ।

''भवतु । भवान् मां खादितुम् अर्हति, उत अहं भवन्तं नद्यां पातयितुम् अर्हामि इति सः एव निर्णयतु'' इति अवदत् कूर्मः ।

तीरे शयानः शृगालः उभयोः सम्भाषणं सम्यक् श्रुत्वा विवादविषयं पूर्णतया अवगतवान् आसीत् ।

''शृगालमित्र ! भोः शृगालमित्र !'' इति जीतुः कूर्मः च उच्चैः आहूतवन्तौ । किन्तु शृगालः उत्कर्णः भूत्वा श्रवणार्थं प्रयत्नं कुर्वाणः अपि किमपि अश्रुतवान् इव अभिनयं कृतवान् । जीतुः पुनरपि उच्चैः शृगालम् आह्वयत् ।

''अहं किमपि न शृणोमि । किञ्चित् उच्चैः वदन्तु तावत्'' इति अवदत् शृगालः । कूर्मः विवादविषयम् उच्चस्वरेण न्यवेदयत् ।

''अहो, किञ्चिदपि न शृणोमि । न जाने मम कर्णयोः किं जातम् इति । किञ्चित् समीपम्

## तेषां विश्वासः

अन्यवन्यजातीयाः इव उत्कलमूलवासिनः अपि दैवे, भूतप्रेतादिषु च विश्वासवन्तः । तत्सम्बन्धिनः अनेके आचाराः सन्ति तेषाम् । तेषां विश्वासाः केचन -

★ यदि कश्चन मृगयाजीवी स्वप्ने स्वगृहं प्रति वध्वाः आगमनं पश्यति तर्हि सः हरिणस्य मारणे समर्थः भवति । यदि स्वप्ने कस्यचित् प्राणिनः मारणं दृश्यते तर्हि स्वप्नद्रष्टुः एव मरणं प्रायः सम्भवति ।



★ मृगयाजीवी यदि मार्गे रिक्तपात्रं वहन्तीं महिलां पश्यति तर्हि सः मृगयायाम् एकम् अपि प्राणिनं मारयितुं न शक्नोति । यदि सः पूर्णपात्रं वहन्तीं पश्यति तर्हि तत् नितरां शुभकरम् ।

★ शृगालं लक्ष्यीकृत्य गृहीतः बाणः, महिलया पादेन स्पृष्टः बाणः च लक्ष्य-स्पर्शने असमर्थः भवति ।

आगत्य वदन्तु तावत्'' इति अवदत् शृगालः ।

कूर्मः तीरसमीपम् आगत्य पुनरपि अवदत् विवादविषयम् ।

''उक्तं स्पष्टतया न ज्ञायते । इतोऽपि समीपम् आगच्छतु'' इति अवदत् शृगालः ।

अतः कूर्मः तीरम् एव स्पृष्टवान् इव । जीतुः शृगालं विवादविषयं वक्तुं मुखम् उद्घाटयितुम् उद्युक्तः ।

''मूर्ख ! आदौ तीरे पदं स्थापयतु'' इति आदिशत् शृगालः । जीतुः झटिति तीरे पदं स्थापयित्वा दीर्घं निःश्वसितवान् ।

''इतोऽपि किमर्थम् अत्र स्थीयते कूर्म-महाशय ! तस्य ग्रहणात् पूर्वं जले निमज्जतु रे'' इति कूर्मम् असूचयत् शृगालः । एतत् श्रुत्वा कूर्मः जले निमज्जन् ततः अदृश्यः अभवत् । चतुरः शृगालः सन्तोषेण स्वस्य वासस्थानम् अगच्छत् ।



# केषाञ्चित् शब्दानाम् अर्थः

***बस्ती*** – गृहाणां समूहरूपः वसतिप्रदेशः ।

***छठी*** – शिशोः जन्मानन्तरं षष्ठे दिने क्रियमाणः कार्यक्रमः । तद्दिने 'भलुवा'-पर्णानाम् उपरि शिशु शाय्यते । पत्रस्थानि कण्टकानि शिशोः शरीरं विध्यन्ति । उत्कलमूलवासिनां विश्वासः यत् कण्टकानां वेधनतः शिशोः शरीरे रोग-निरोधकशक्तिः उत्पद्यते, येन च अग्रिमे जीवने रोगाः तं न बाधन्ते इति ।

***सर्ण*** – सालवृक्षः ।

***सर्णबर्हिया*** – उत्कलमूलवासिनां प्रमुखः आराध्यदेवः ।

***हरिया*** – तण्डुलतः निर्मीयमाणः मद्यप्रकारः कश्चन, यश्च महतः मृत्पात्रस्य साहाय्येन निर्मीयते, समारम्भेषु वितीर्यते च ।

***महुवा*** – 'महुवा'नामकानां पुष्पाणाम् उपयोगेन सज्जीक्रियमाणः अपरः मद्य-प्रकारः ।

***मन्देर*** – 'गम्भार'नामकस्य वृक्षस्य प्रकाण्डम् उपयुज्य सज्जीक्रियमाणं वाद्यम् । मृत्तिकया अपि एतत् वाद्यं सज्जीक्रियते ।

***लोहाटीनगेरा*** – अपरप्रकारकम् आतोद्य-वाद्यम् ।

***'नागरी'मृत्तिका*** – एषा कृष्णवर्णीया । फेनकस्थाने एतस्याः उपयोगः क्रियते । एषा अतिमसृणा भवति । अतः केशानां शरीरस्य च स्वच्छतार्थम् एषा उपयुज्यते ।

# पक्काः चणकाः कथम् अङ्कुरिताः स्युः ?

मासद्वयतः अजीजः प्रतिक्षणम् आकाशं पश्यति आशया - 'वृष्टिः भवेत् किम्' इति । एषः प्रश्नः न केवलं तस्य, अपि तु ग्रामे स्थितानां सर्वेषाम् अपि । 'कृषेः का गतिः ?' इति सर्वेषाम् आतङ्कः । किन्तु वृष्टिकारणेन वरुणदेवेन जनानां प्रार्थना न श्रुता एव इति भाति । ग्रामे सर्वेऽपि चिन्ताक्रान्ताः सन्ति ।

निर्धनस्य कृषिकस्य अजीजस्य तु दयनीया स्थितिः । तेन वर्धितानि सर्वाणि धान्यसस्यानि शुष्काणि जातानि सन्ति । भोजनार्थं किमपि नास्ति गृहे । उद्योगोऽपि न लभ्यते । अतः नगरं गत्वा उद्योगान्वेषणं करणीयम् इति निश्चित्य सः भूमिम् अल्पमूल्येन विक्रीतवान् । प्रस्थान-समये वणिजः मीरचन्दतः नव पक्वानि अण्डानि ऋणरूपेण प्राप्य प्रस्थितवान् सः ।

'एषः ऋणरूपेण एव एतानि अण्डानि नीतवान्, किन्तु तेषां धनं न प्रत्यागच्छेत् एव । यस्य गृहे वराटिकामात्रम् अपि धनं नास्ति सः कथं वा ऋणं प्रत्यर्पयेत् ? गच्छतु नाम । नवानाम् अण्डानां मूल्यं न प्राप्तं चेत् अहं तु निर्धनः न भवामि । तेषां कारणतः कानिचन दिनानि सः यदि बुभुक्षां निवारयितुं शक्नुयात् तर्हि मया अपि पुण्यं प्राप्येत' इति चिन्तितवान् मीरचन्दः ।



अहो, दैवगतिः चित्रा । अकिञ्चनः सन् गृहात् निर्गतः अजीजः सप्तवर्षाभ्यन्तरे महा-धनिकः संवृत्तः । ग्रामम् आगतः सः सौधसदृशं गृहं क्रीतवान् । सञ्चारार्थम् अश्वशकटाः आगताः । अमूल्यानि वस्त्राणि धरति स्म सः । हस्तस्य सर्वासु अङ्गुलीषु सुवर्णाङ्गुलीयकानि ! विशाला कृषिभूमिः क्रीता तेन । फलवाटिका अपि क्रीता । तस्य ऐश्वर्यं दृष्ट्वा ग्रामीणाः दिग्भ्रान्ताः ।

मीरचन्दः ऋणरूपेण दत्तानि नव पक्वानि अण्डानि न विस्मृतवान् आसीत् । सः अजीजस्य प्रासादं गत्वा द्वारशब्दं कृतवान् । शुभ्रवस्त्रधारी कश्चन सेवकः द्वारम् उद्घाटित-वान् । "अहम् अजीजेन मेलितुम् इच्छामि" इति अवदत् मीरचन्दः ।

सेवकः अन्तः गमनाय मार्गं दर्शितवान् । अजीजः तं विनयेन स्वागतीकृतवान् । तं दृष्ट्वा मीरचन्दः अवदत् - "अजीज ! सप्तभ्यः वर्षेभ्यः पूर्वं ग्रामत्यागावसरे मया नव अण्डानि दत्तानि भवते । तेषां मूल्यत्वेन सहस्रं सुवर्ण-नाणकानि दातव्यानि सन्ति भवता" इति ।

"नवानाम् अण्डानां मूल्यं सहस्रं सुवर्ण-नाणकानि ! भवान् विनोदार्थं वदन् नास्ति खलु ? भवान् ऋणरूपेण तानि दत्तवान् इत्यतः

अहम् अधमर्णः अस्मि । तेषां योग्यं मूल्यं दातुम् इच्छामि अपि । किन्तु भवदुक्तं मूल्यं तु न अर्हन्ति तानि'' इति अवदत् अजीजः ।

''मया सहस्रं सुवर्णनाणकानि एव इष्यन्ते'' इति दृढस्वरेण अवदत् मीरचन्दः । किन्तु अजीजः तावत् मूल्यं दातुं न इष्टवान् । अतः मीरचन्दः व्यवहारं न्यायालयं नीतवान् ।

न्यायाधिकारी उभयोः अपि कथनं श्रुत्वा अवदत् - ''श्वः उभौ अपि आगच्छताम् । निर्णयं श्रावयिष्यामि'' इति ।

अनन्तरदिने अजीजः युक्ते समये न आगतः, प्रत्युत आगमने घण्टाद्वयात्मकं विलम्बं कृतवान् सः ।

यदा सः उपस्थितः तदा तं क्रोधेन पश्यन् मीरचन्दः न्यायाधीशम् अवदत् - ''मान्याः ! एषः ऐश्वर्यप्राप्तितः मां वञ्चितवान् । यदि तानि अण्डानि एतस्मै न दत्तवान् स्याम्, तानि च मत्समीपे एव स्थितानि स्युः तर्हि ततः शावकाः उत्पन्नाः स्युः । यदा उत्तमकुक्कुटयः भवेयुः तर्हि प्रभूतानि अण्डानि दद्युः । ततः उत्पन्नानि अण्डानि विक्रीय प्रायः दशसहस्राधिकानि सुवर्णनाणकानि प्राप्तवान् स्याम् । मया विपत्काले एतस्मै तानि दत्तानि । प्रतिफलरूपेण सुवर्णनाणकसहस्रमात्रं पृष्टम् । एषः तस्य दानं निराकृतवान् । अद्यापि धाष्टर्येन व्यवहरन् विलम्बेन उपस्थितः अस्ति'' इति ।

''भोः, विलम्बेन आगच्छता भवता न्यायालयव्यवहारे विघ्नः कल्पितः । कुतः अस्माभिः न दण्डनीयः भवान् ? विलम्बः किमर्थं कृतः ?'' इति अजीजम् अपृच्छत् न्यायाधीशः ।

''श्रीमन् ! विलम्बः कृतः यत् तदर्थं क्षन्तव्यः अहम् । अहं मम उद्याने व्यञ्जनम्



आरोपयन् आसम् । तदर्थं विलम्बः जातः'' इति विनयेन अवदत् अजीजः ।

''उद्याने व्यञ्जनस्य आरोपणम् ! किम् एतत् हास्यास्पदं वचनम् !!'' इति अवदत् न्यायाधीशः ।

''श्रीमन् ! मम गृहस्य पाचकः अद्य चणकैः व्यञ्जनं सज्जीकृतवान् आसीत् । व्यञ्जन-खादनसमये मम मनसि विचारः आगतः यत् व्यञ्जनं भूमौ स्थापितं चेत् चणकवाटिका निर्मातुं शक्या इति । तदेव कुर्वन् आसम् अहम्'' इति उक्तवान् अजीजः।

''रे मूर्ख ! व्यञ्जनस्थाः पक्वाः चणकाः अङ्कुरिताः न भवन्ति इत्यपि किं न ज्ञायते भवता ? कीदृशः अविवेकी भवान् !!'' इति उपहासपूर्वकम् उक्तवान् न्यायाधीशः ।

''यदि मीरचन्दस्य पक्वेभ्यः अण्डेभ्यः शावकाः उत्पन्नाः भवेयुः तर्हि मम पक्वेभ्यः चणकेभ्यः कुतो वा अङ्कुराणि न उत्पद्येरन् ?'' इति पृष्टवान् अजीजः ।

मीरचन्दः निरुत्तरः जातः । न्यायाधीशः मन्दहासं प्रकटितवान् । अजीजस्यैव जयः जातः ।

# पक्काः चणकाः कथम् अङ्कुरिताः स्युः ?

मासद्वयतः अजीजः प्रतिक्षणम् आकाशं पश्यति आशया - 'वृष्टिः भवेत् किम्' इति । एषः प्रश्नः न केवलं तस्य, अपि तु ग्रामे स्थितानां सर्वेषाम् अपि । 'कृषेः का गतिः ?' इति सर्वेषाम् आतङ्कः । किन्तु वृष्टिकारणेन वरुणदेवेन जनानां प्रार्थना न श्रुता एव इति भाति । ग्रामे सर्वेऽपि चिन्ताक्रान्ताः सन्ति ।

निर्धनस्य कृषिकस्य अजीजस्य तु दयनीया स्थितिः । तेन वर्धितानि सर्वाणि धान्यसस्यानि शुष्काणि जातानि सन्ति । भोजनार्थं किमपि नास्ति गृहे । उद्योगोऽपि न लभ्यते । अतः नगरं गत्वा उद्योगान्वेषणं करणीयम् इति निश्चित्य सः भूमिम् अल्पमूल्येन विक्रीतवान् । प्रस्थान-समये वणिजः मीरचन्दतः नव पक्वानि अण्डानि ऋणरूपेण प्राप्य प्रस्थितवान् सः ।

'एषः ऋणरूपेण एव एतानि अण्डानि नीतवान्, किन्तु तेषां धनं न प्रत्यागच्छेत् एव । यस्य गृहे वराटिकामात्रम् अपि धनं नास्ति सः कथं वा ऋणं प्रत्यर्पयेत् ? गच्छतु नाम । नवानाम् अण्डानां मूल्यं न प्राप्तं चेत् अहं तु निर्धनः न भवामि । तेषां कारणतः कानिचन दिनानि सः यदि बुभुक्षां निवारयितुं शक्नुयात् तर्हि मया अपि पुण्यं प्राप्येत' इति चिन्तितवान् मीरचन्दः ।



अहो, दैवगतिः चित्रा । अकिञ्चनः सन् गृहात् निर्गतः अजीजः सप्तवर्षाभ्यन्तरे महा-धनिकः संवृत्तः । ग्रामम् आगतः सः सौधसदृशं गृहं क्रीतवान् । सञ्चारार्थम् अश्वशकटाः आगताः । अमूल्यानि वस्त्राणि धरति स्म सः । हस्तस्य सर्वासु अङ्गुलीषु सुवर्णाङ्गुलीयकानि ! विशाला कृषिभूमिः क्रीता तेन । फलवाटिका अपि क्रीता । तस्य ऐश्वर्यं दृष्ट्वा ग्रामीणाः दिग्भ्रान्ताः ।

मीरचन्दः ऋणरूपेण दत्तानि नव पक्वानि अण्डानि न विस्मृतवान् आसीत् । सः अजीजस्य प्रासादं गत्वा द्वारशब्दं कृतवान् । शुभ्रवस्त्रधारी कश्चन सेवकः द्वारम् उद्घाटित-वान् । ''अहम् अजीजेन मेलितुम् इच्छामि'' इति अवदत् मीरचन्दः ।

सेवकः अन्तः गमनाय मार्गं दर्शितवान् । अजीजः तं विनयेन स्वागतीकृतवान् । तं दृष्ट्वा मीरचन्दः अवदत् - ''अजीज ! सप्तभ्यः वर्षेभ्यः पूर्वं ग्रामत्यागावसरे मया नव अण्डानि दत्तानि भवते । तेषां मूल्यत्वेन सहस्रं सुवर्ण-नाणकानि दातव्यानि सन्ति भवता'' इति ।

''नवानाम् अण्डानां मूल्यं सहस्रं सुवर्ण-नाणकानि ! भवान् विनोदार्थं वदन् नास्ति खलु ? भवान् ऋणरूपेण तानि दत्तवान् इत्यतः

अहम् अधमर्णः अस्मि । तेषां योग्यं मूल्यं दातुम् इच्छामि अपि । किन्तु भवदुक्तं मूल्यं तु न अर्हन्ति तानि'' इति अवदत् अजीजः ।

''मया सहस्रं सुवर्णनाणकानि एव इष्यन्ते'' इति दृढस्वरेण अवदत् मीरचन्दः । किन्तु अजीजः तावत् मूल्यं दातुं न इष्टवान् । अतः मीरचन्दः व्यवहारं न्यायालयं नीतवान् ।

न्यायाधिकारी उभयोः अपि कथनं श्रुत्वा अवदत् - ''श्वः उभौ अपि आगच्छताम् । निर्णयं श्रावयिष्यामि'' इति ।

अनन्तरदिने अजीजः युक्ते समये न आगतः, प्रत्युत आगमने घण्टाद्वयात्मकं विलम्बं कृतवान् सः ।

यदा सः उपस्थितः तदा तं क्रोधेन पश्यन् मीरचन्दः न्यायाधीशम् अवदत् - ''मान्याः । एषः ऐश्वर्यप्राप्तितः मां वञ्चितवान् । यदि तानि अण्डानि एतस्मै न दत्तवान् स्याम्, तानि च मत्समीपे एव स्थितानि स्युः तर्हि ततः शावकाः उत्पन्नाः स्युः । यदा उत्तमकुक्कुटयः भवेयुः तर्हि प्रभूतानि अण्डानि दद्युः । ततः उत्पन्नानि अण्डानि विक्रीय प्रायः दशसहस्राधिकानि सुवर्णनाणकानि प्राप्तवान् स्याम् । मया विपत्काले एतस्मै तानि दत्तानि । प्रतिफलरूपेण सुवर्णनाणकसहस्रमात्रं पृष्टम् । एषः तस्य दानं निराकृतवान् । अद्यापि धाष्ट्र्येन व्यवहरन् विलम्बेन उपस्थितः अस्ति'' इति ।

''भोः, विलम्बेन आगच्छता भवता न्यायालयव्यवहारे विघ्नः कल्पितः । कुतः अस्माभिः न दण्डनीयः भवान् ? विलम्बः किमर्थं कृतः ?'' इति अजीजम् अपृच्छत् न्यायाधीशः ।

''श्रीमन् ! विलम्बः कृतः यत् तदर्थं क्षन्तव्यः अहम् । अहं मम उद्याने व्यञ्जनम्



आरोपयन् आसम् । तदर्थं विलम्बः जातः'' इति विनयेन अवदत् अजीजः ।

''उद्याने व्यञ्जनस्य आरोपणम् ! किम् एतत् हास्यास्पदं वचनम् !!'' इति अवदत् न्यायाधीशः ।

''श्रीमन् ! मम गृहस्य पाचकः अद्य चणकैः व्यञ्जनं सज्जीकृतवान् आसीत् । व्यञ्जन-खादनसमये मम मनसि विचारः आगतः यत् व्यञ्जनं भूमौ स्थापितं चेत् चणकवाटिका निर्मातुं शक्या इति । तदेव कुर्वन् आसम् अहम्'' इति उक्तवान् अजीजः।

''रे मूर्ख ! व्यञ्जनस्थाः पक्वाः चणकाः अङ्कुरिताः न भवन्ति इत्यपि किं न ज्ञायते भवता ? कीदृशः अविवेकी भवान् !!'' इति उपहासपूर्वकम् उक्तवान् न्यायाधीशः ।

''यदि मीरचन्दस्य पक्वेभ्यः अण्डेभ्यः शावकाः उत्पन्नाः भवेयुः तर्हि मम पक्वेभ्यः चणकेभ्यः कुतो वा अङ्कुराणि न उत्पद्येरन् ?'' इति पृष्टवान् अजीजः ।

मीरचन्दः निरुत्तरः जातः । न्यायाधीशः मन्दहासं प्रकटितवान् । अजीजस्यैव जयः जातः ।

# वार्ताविशेषाः

## भूगोलस्य वयः १२,५००,०००,०० वर्षाणि



एतस्य भुगोलस्य वयः एतावत् स्यात् इति विज्ञानिनः अभिप्रयन्ति । ते कथम् एतं निर्णयं कृतवन्तः इति ज्ञातुं भवतां कुतूहलम् अस्ति खलु ? संशोधकाः अतिप्राचीननक्षत्रे दृश्यमानं सजीवयुरेनियम्द्रव्यम् अवलम्ब्य स्वपरीक्षां कृतवन्तः । तैः 'रेडियेक्टिव् कास्मो क्रोनोमेट्रि' इत्येतत् आधुनिकं तन्त्रज्ञानम् उपयुक्तम् एतदर्थम् । एतत् तन्त्रज्ञानम् उत्कृष्टं दोषरहितं च इति अभिप्रयन्ति ते । तैः परीक्षार्थं स्वीकृतं नक्षत्रं - सि.एस्.३१०८२-००१ नामकम् । दक्षिणामेरिकायां चैल्प्रदेशे पेरनल् इत्यत्र स्थापितं बृहत् दूरदर्शकम् उपयुक्तं तैः एतदर्थम् । एतस्मिन् नक्षत्रे स्थितं युरेनियंद्रव्यं भूगोलस्य वयसः अभ्यूहे उपकारकं जातम् ।



## मङ्गलग्रहे जीविसद्भावः

हङ्गरीदेशीयाः विज्ञानिनः वदन्ति यत् मङ्गलग्रहे जीविनः सन्ति इत्यत्र स्पष्टप्रमाणानि सन्ति इति । ते उपग्रहसाहाय्येन विविधकोणेभ्यः स्वीकृतानि ६०,००० भावचित्राणि सूक्ष्मेक्षिकया परिशीलितवन्तः । ततः तैः सहस्राधिकानि पादचिह्नानि परिलक्षितानि । तानि हिममय्यां भूमौ स्पष्टतया दृष्टिगोचराणि भवन्ति स्म ।

## 'अमेरिका'शब्दस्य प्रथमप्रयोगः

क्रिस्टफर् कोलम्बसः १४९२ तमे वर्षे सेन् सल्वडार्नामकम् अमेरिकीयं तीरं प्राप्तवान् इति सर्वे जानन्ति एव । किन्तु 'अमेरिका'शब्दस्य प्रथमप्रयोगः कदा अभवत् इति किं भवन्तः जानन्ति ? १९०१-०२ तमे वर्षे वास्पुक्कि एतं भूखण्डं प्राप्य एतस्य पार्थक्येन स्थितिं लक्षितवान् । ततः मार्टिन् म्यूलरनामकः एतं भूखण्डम् 'अमेरिका' इति निर्दिष्टवान् । एतादृशोल्लेखयुतस्य मानचित्रस्य प्रतिकृतयः न उपलभ्यन्ते । अद्वितीया एषा प्रतिकृतिः अमेरिकीयेन 'लैब्ररी आफ् काङ्ग्रेस्' नामकेन ग्रन्थालयेन १०,०००,००० डालराणि दत्त्वा क्रीता अस्ति ।







## भाग्यपत्रात् प्राप्तं सौभाग्यम्

जर्मनीदेशीये फ्राङ्कफर्ट्नगरे वसन्ती पञ्चशत्-वर्षीया काचित् वृद्धा आहारखण्डस्य क्रयणस्य चिन्तनं परित्यज्य सप्टम्बर्मासस्य प्रथमे दिनाङ्के एकं भाग्यपत्रं क्रीतवती । तद्बलात् १०,०००,००० अमेरिकन्-डालरात्मकं पुरस्कारं च प्राप्तवती । सा कदापि भाग्यपत्रादिक्रयणे न आसक्ता । एकदा स्वस्य आर्थिकदुस्स्थितिं दृष्ट्वा नितरां खिन्ना सा भाग्यपरीक्षार्थं भाग्यपत्रं क्रीतवती । ताम् अनुसरन्तः यदि भवन्तः अपि भाग्यपत्रं क्रीणीयुः तर्हि अनुकम्पापात्राणि भवेयुः !!

# भारतम् अवगम्यताम्

## प्रश्नोत्तरम्

एतस्मिन् मासे मिश्रप्रश्नाः सन्ति । कियतां प्रश्नानाम् उत्तराणि वक्तुं शक्नुयुः भवन्तः ? प्रयत्नम् आरभन्ताम् ।

१. कस्मिन् दिनाङ्के भारतस्य जनसङ्ख्या शतकोटित्वं प्राप्तवती ?

२. प्रपञ्चस्य अत्युन्नतं शिखरम् 'एवरेस्ट्' नेपाल-टिबेट्-सीमायाम् अस्ति । भारतस्य अत्युन्नतं शिखरं किम् ? तस्य औन्नत्यं च कियत् ?

३. पञ्चानां नदीनां कारणतः 'पञ्जाब' इति नाम आगतम् । ताः पञ्च नद्यः काः ?

४. गतवर्षे रूपितानि त्रीणि नूतनराज्यानि कानि ? तेषां नाम, तेषां राजधानीनां नाम च किम् ?

५. स्वातन्त्र्यप्राप्तेः अनन्तरं केनचित् राज्येन उभे मुख्यमन्त्रिण्यौ दृष्टे । तस्य राज्यस्य नाम किम् ? तयोः मुख्यमन्त्रिण्योश्च नाम किम् ?

### 'अक्टोबर्'मासस्य प्रश्नानाम् उत्तराणि

१. ओणम् । एषः उत्सवः केरले आचर्यते । विष्णोः पञ्चमावतारभूतेन वामनेन पाताले प्रेषितः राजा महाबली वार्षिकदर्शनार्थं भूमिम् आगच्छति यत् तत् निमित्तीकृत्य एतत् आचर्यते ।

२. दीपावली । नवम्बर्मासस्य १४ दिनाङ्के ।

३. विद्याधिदेवतायाः सरस्वत्याः निमित्तम् आचर्यमाणस्य नवरात्रोत्सवस्य अन्तिमे दिने विजयदशम्याम् । बङ्गालीयाः वसन्तपञ्चमीदिने सरस्वतीपूजां कुर्वन्ति ।

४. रक्षाबन्धनोत्सवः भ्रातृद्वितीया च ।

६. खेरवाद साल् इति । एतत् झरतुष्ट्रस्य जन्मदिनम् ।

७. येसुक्रिस्तस्य शूलारोपानन्तरं यत् पुनरुज्जीवनं जातं तत् निमित्तीकृत्य ईस्टर् आचर्यते ।

८. बुद्धः एतस्मिन् एव दिने जन्म प्राप्तवान् । ज्ञानोदयः अपि जातः एतस्मिन् दिने एव । निर्वाणम् अपि एतस्मिन् एव दिने जातम् ।

९. पोङ्गल्दिने ।

१०. शबरिमलैनामके पर्वते स्थिते अय्यप्पदेवालये भक्ताः कांश्चन क्षणान् यावत् आकाशे दिव्यप्रभां द्रष्टुं शक्नुवन्ति ।

### *'नवम्बर्'मासीयप्रश्नानाम् उत्तराणि*

१. ध्रुवः । पिता उत्तानपादः ।

२. मार्कण्डेयः । मृकण्डुः इति ।

३. प्रह्लादः । संरक्षकः भगवान् विष्णुः ।

४. नचिकेताः । पिता वाजश्रवाः ।

५. एकलव्यः । कौरवाः पाण्डवाश्च ।

६. भरतः । पिता दुष्यन्तः ।

# २२. सीतायाः अज्ञातम् अन्यत् मुखम्



''चमेलीम् अधिकृत्य सन्दीपः यत् उच्चैः हसन् आसीत् तत् देवनाथवर्यम् आश्चर्यचकितम् अकरोत् । एतादृशेन उच्चस्वरेण सन्दीपेन कृतम् हासम् इतःपूर्वं न दृष्टवान् आसीत् सः ।

दिनपत्रिकां हस्तेन गृहीत्वा स्वागतप्रकोष्ठम् आगतवान् सः । तस्मिन् एव समये तस्य स्नुषा जयश्रीः अपि अन्यप्रकोष्ठतः तत्र आगतवती । ''दुष्टाः एते । अन्यस्य शान्तेः भङ्गः भवति इत्यपि न चिन्तयन्ति ते'' इति उक्तवती सा । देवनाथवर्यस्य विश्रान्तिभङ्गं कृतवन्तौ बालौ इति तस्याः आतङ्कः आसीत् ।

किन्तु देवनाथवर्यः मध्याह्नभोजनोत्तरं लघुनिद्रां समाप्य पत्रिकां पठन् आसीत् इति यदा तया ज्ञातं तदा तस्याः चिन्ता किञ्चिदिव अपगता अभवत् ।

''किम् अहं भवतः निमित्तं चायं प्रकोष्ठं प्रति एव आनयानि ?'' इति देवनाथवर्यं पृष्टवती जयश्रीः ।

''अस्तु ! किन्तु आदौ वयं सन्दीपस्य महाहासस्य कारणं जानीयाम'' इति मन्दहासपूर्वकम् उक्तवान् देवनाथवर्यः । ततः तौ बालयोः समीपं गत्वा हासस्य कारणं पृष्टवन्तौ ।

*अनुवर्तमाना कथामाला*



''तात ! यदि अहं बीजिङ्गनगरे प्रवर्तिष्यमाणायाम् ओलम्पिक्स्पर्धायां भारतीयगणस्य नायकः स्यां तर्हि भवान् किं वदेत् ? भवान् अपि उच्चैः हसेत् एव ननु ?'' इति पृष्टवान् सन्दीपः ।

''न हसेयम् अपि ! अहम् अपि आत्मानं राष्ट्रियमुष्टियुद्धकोविदेषु प्रथमस्थानं प्राप्तवन्तं घोषयेयम्'' इति हसन् एव उक्तवान् देवनाथवर्यः ।

''युद्धे यदि भवतः आसक्तिः अस्ति तर्हि चमेल्याः गणे नानासाहेबस्य पात्रं भवान् एव निर्वहतु । सा तु लक्ष्मीबाय्याः पात्रं निर्वक्ष्यति । विद्यालयस्य स्वर्णजयन्तीकार्यक्रमस्य निमित्तम् आयोक्ष्यमाने 'झान्सीराणी'नाटके एषा एव लक्ष्मीबायीपात्रं निर्वहति । धीरा दृढमनस्का युद्धनिपुणा सा क । कोमलचित्ता एषा क । एषा तु सीतापात्रं निर्वोढुं योग्या, न तु झान्सीराज्ञ्याः लक्ष्मीबाय्याः पात्रम्'' इति उक्तवान् सन्दीपः ।

''चमेली लक्ष्मीबायीपात्रं निर्वहति यत् तत्र अहं तु अनौचित्यं न पश्यामि । वस्तुतस्तु लक्ष्मीबायी अपि लज्जाशीला, कोमलकाया, मृदुहृदया चैव आसीत् । किन्तु यदा तादृशी परिस्थितिः आयाता तदा प्रबलम् आंग्लसेनापतिम् अपि सम्मुखीकुर्वती सा धैर्यस्य राष्ट्रभक्तेः च उदाहरणभूता जाता । तदस्तु, सीता भीरुशीला इति कथं वक्तुं शक्या ?'' इति अपृच्छत् देवनाथवर्यः ।

''सीता सर्वदा भीरुस्वभावा, लज्जाशीला, दौर्भाग्यपीडिता चैव परिलक्ष्यते खलु समग्रे रामायणे ? ततः तथा उच्यते'' इति उक्तवती जयश्रीः ।

''आम् ! एतत् सत्यम् एव खलु ?'' इति पृष्टवान् सन्दीपोऽपि ।

''किं सत्यं, किं मिथ्या इति वयं किञ्चित् चिन्तयाम तावत् । उपविशतु । अहं सीताविषये कांश्चन प्रश्नान् पृच्छामि । तदनन्तरं भवान् स्वाभिप्रायस्य युक्तायुक्ततां निर्णेतुम् अभिप्रायपरिवर्तनं कर्तुं वा स्वतन्त्रः एव । रामेण अरण्यं गन्तव्यम् इति कैकेय्या अपेक्षा कृता आसीत्, न तु सीतया अपि गन्तव्यम् इति । एवं ननु ?'' इति पृष्टवान् देवनाथवर्यः ।

''आम् ! कथायां तथैव श्रूयते'' इति उक्तवती जयश्रीः ।

तावता उभौ अपि बालौ आसने उपविष्टौ आस्ताम् ।

''अरण्यं गन्तव्यम् इति केन वा सीता आदिष्टा ? ज्येष्ठैः निषिध्यमाना अपि सा अरण्यगमनं सङ्कल्पितवती । किम् एतत् तस्याः दृढसङ्कल्पशक्तिं न द्योतयति ?''

देवनाथवर्यः प्रतीक्षितवान् - कस्यापि मुखात् किमपि वचनम् आगच्छेत् किम् इति । किन्तु कोऽपि किमपि न उक्तवान् ।

जयश्रीः तु मूलरामायणम् एव समग्रतया पठितवती आसीत् । चमेलीसन्दीपौ रामायण-सङ्ग्रहं पठितवन्तौ आस्ताम् । एवं त्रयः अपि समग्रां रामायणकथां तु सम्यक् जानन्ति स्म एव ।

देवनाथवर्यः कथनम् अनुवर्तितवान् - ''सीतायाः जीवनघटनां वस्तुनिष्ठदृष्ट्या सकृत् परिशीलयाम । सुवर्णमृगः आवश्यकः एव इति उक्त्वा अरण्ये सीता रामं प्रेषितवती । यदा मायामयः असुरः रामस्य ध्वनिम् अनुकुर्वन् आक्रन्दनं कृतवान् तदा सीता लक्ष्मणं बलात् प्रेषितवती - मया एकाकितया स्थातव्यं भवति इति जानती अपि । लक्ष्मणस्य सूचनाम् अपि धिक्कृत्य भिक्षादानाय लक्ष्मणरेखाम् अतिक्रम्य अपि गतवती, राक्षसराजेन गृहीता अभवत् च । एतासु सर्वासु घटनासु भीरुता कुत्र दृश्यते ?

एताः सर्वाः घटनाः दृष्ट्वा अपि किं वयं तां भीरुं कथयितुम् अर्हाम ? अत्र सर्वत्र किं तस्याः सङ्कल्पदृढता न दृश्यते ? सा परिस्थित्यधीना न आसीत् इति तु स्पष्टं खलु ?''

''मया एतया दृष्ट्या एताः घटनाः



अद्यावधि न परिशीलिताः एव'' इति उक्तवती जयश्रीः ।

''अम्ब ! धन्यवादाः भवत्यै । ज्येष्ठा प्राज्ञा भवती एव एतया दृष्ट्या न चिन्तितवती इति स्थिते पितामहः पामरान् अस्मान् कथं वा निन्देत् ?'' इति मन्दहासपूर्वकम् उक्तवान् सन्दीपः ।

देवनाथवर्यः अर्धनिमीलितनेत्रः स्वस्य कथनम् अनुवर्तितवान् - ''हनुमान् अशोकवने सीतां दृष्ट्वा उक्तवान् यत् समुद्रं तारयित्वा भवतीं रामसमीपं नेष्यामि इति । किन्तु सीतया एतत् दृढस्वरेण निराकृतम् । 'रावणः मां चौर्येण आनीतवान् । रामदूतः भवान् अपि यदि मां चौर्येण नयेत् तर्हि रामरावणयोः कः भेदः अवशिष्टः ? रामः रावणं जित्वा मां नयेत् । तदेव युक्तम्' इति उक्तवती सा । किम् एषा

घटना तस्याः भीरुतां प्रमाणीकरोति ? दृढचित्ततां दर्शयन्ती सा हनूमतः निरपायतां चिन्तितवती । यदा युद्धं समाप्तं तदा अपि अग्निपरीक्षां सा स्वयम् एव चिन्तितवती, न तु रामेण अन्येन वा आज्ञप्ता । एवं सर्वत्रापि सा स्वस्य इच्छायाः अनुगुणम् एव व्यवहृतवती । यत् सा युक्तम् अमन्यत तदेव कृतवती सा ।''

एतावत् उक्त्वा देवनाथवर्यः मौनम् आश्रितवान् । तम् अनुसरन्तः अन्येऽपि मौनेन एव आसन् । तदा चमेली तस्य हस्तात् रिक्तं चायचषकं स्वीकुर्वती प्रश्नं कृतवती – ''तात ! रामायणस्य अन्ते सा अपराम् अग्निपरीक्षाम् अनङ्गीकुर्वती किमर्थं भूमौ विलीना जाता ?'' इति ।

''उत्तमः प्रश्नः अयम् । प्रथमा अग्निपरीक्षा तया स्वयम् एव इष्टा आसीत् । किन्तु द्वितीयवारम् अग्निपरीक्षा भवतु इति अन्ये अपेक्षां कृतवन्तः । जनसमूहस्य पुरतः अग्निं प्रविश्य स्वस्य परिशुद्धतां सा प्रमाणीकरोतु इति ते इष्टवन्तः । एतत् तस्याः सम्मतं न आसीत् । अतः सा भूमिं प्रविष्टवती । भूमिः एव तस्याः माता इति भवन्तः जानीयुः एव खलु ?

दुष्टशक्तेः दुराचारस्य च प्रतीकभूतस्य रावणस्य संहारार्थं रामः प्रेरणीयः आसीत् तया । तत् कर्तव्यं तया सम्यक् कृतम् । अतः सा इतः परं करणीयं किमपि नास्ति इत्यतः भूमिं प्रविष्टवती । उत्तमशासनं कीदृशं भवेत् इति रामेण जगतः पुरतः स्वव्यवहारेण उदाहरणम् उपस्थापनीयम् आसीत् । रामावतारस्य उद्देशः न सिद्धः आसीत् । अतः स्वकर्तव्ये निरतः भवितुं रामाय अवकाशं दत्त्वा स्वस्य कर्तव्यं समाप्य भूमिं प्रविष्टवती सा ।

अन्यच्च, श्रीरामपट्टाभिषेकपर्यन्तः भागः एव वाल्मीकिना रचितः, तदनन्तरभागः तन्नाम उत्तररामायणं, केनापि समर्थेन कविना रचितम् इति वादोऽपि श्रूयते । एतदपि अत्र स्मर्तव्यम् अस्माभिः'' इति वदन् देवनाथवर्यः स्वस्य कथनं समापितवान् ।





# देवीभागवतम्

शुकः यदा विवाहं सुदृढतया निराकृतवान् तदा व्यासः आत्मना रचितं देवीभागवतं श्रावितवान् ।

विष्णुः वटपत्रे शयानः आसीत् । सः चिन्तनम् आरब्धवान् – 'अहम् अत्र किमर्थं बालकरूपेण अस्मि ? कः मां सृष्टवान् ? एतस्य उत्तरं मया कथं ज्ञायते ?' इति ।

विष्णोः एतां स्थितिं दृष्टवत्याः देव्याः हृदये करुणा उत्पन्ना । अतः सा श्लोकार्धं श्रावितवती । तस्य अर्थः तु एवम् – 'अत्रैव सर्वम् अस्ति । एतत् ज्ञातं चेत् आत्मा अपि ज्ञातः इव' इति ।

विष्णुः एतत् श्लोकार्धं श्रुतवान् । किन्तु तस्य तात्पर्यं न अवगतं तेन ।

सः तत् श्लोकार्धं पुनः पुनः पठितवान् । तदा महादेवी विष्णोः पुरतः प्रत्यक्षा जाता । तस्याः हस्ते शङ्खचक्रगदादयः आसन् । सा स्वर्णमयानि वस्त्राणि धृतवती आसीत् ।

महादेवीं दृष्ट्वा विष्णुः दिग्भ्रान्तः । तस्य मुखात् किमपि वचनं न निर्गतम् । तदा देवी तम् उक्तवती – ''मायाकारणतः भवान् मां विस्मृतवान् अस्ति । इदानीं भवान् अस्ति सगुणः । अहम् अस्मि सत्त्वशक्तिः । भवतः नाभिकमले ब्रह्मणः जन्म भविष्यति । सः रजोगुणोपेतः सन् लोकान् स्रक्ष्यति । तां सृष्टिं भवान् पालयिष्यति । ब्रह्मदेवस्य भ्रूतः क्रोधकारणतः रुद्रस्य जन्म भविष्यति । सः घोरतपस्यां करिष्यति । तस्य परिणामतः सः सगुणः भविष्यति । प्रलयकाले ब्रह्मणा सृष्टं प्रपञ्चं सः नाशयिष्यति साकल्येन । मम साहाय्येन भवान् प्रपञ्चस्य पालनपोषणादिकं करिष्यति । मां सत्त्वरूपिणीम् अभिजानातु



भवान् । अहं सदा भवतः वक्षःस्थले एव वासं करिष्यामि'' इति ।

तदा विष्णुः महादेवीम् अवदत् - ''मया किञ्चन श्लोकार्धं श्रुतम् । तत् कथं श्रुतं मया ? कृपया वदतु'' इति ।

''भवान् सगुणरूपेण मां पश्यन् अस्ति । निर्गुणसत्त्वरूपिण्या मया एव स च श्लोकः श्रावितः । भगवन्मन्त्रस्य एतस्य पठनतः मङ्गलं भविष्यति'' इति उक्तवती देवी ।

विष्णुः तस्य मन्त्रस्य बलात् एव मधुकैटभौ मारितवान् । शरणागतं ब्रह्माणं तं मन्त्रम् उपदिष्टवान् सः । ब्रह्मा नारदं, नारदः व्यासं च तम् उपदिष्टवान् । व्यासः शुकम् एतम् उपदिशन् उक्तवान् - ''विभिन्नसंहितासु मया एतस्य विस्तृतरचना कृता अस्ति'' इति ।

शौनकादिमुनयः शुकस्य कथायाः श्रवणस्य अनन्तरं सूतम् अभ्यर्थितवतः 'यत् देवीभागवतं श्रावयतु इति । तदा सूतः कथाम् आरब्धवान् -

अयोध्या कोसलराज्यस्य राजधानी । ध्रुवसन्धिः नाम राजा तं देशं पालयति स्म । तस्य उभे पत्न्यौ - मनोरमा लीलावती चेति । मनोरमायाः पुत्रः सुदर्शनः । लीलावत्याः पुत्रस्य नाम शत्रुजित् इति । ध्रुवसन्धिः यदा मृगयार्थं गतः आसीत् तदा कस्यचित् सिंहस्य तस्य च युद्धं प्रवृत्तम् । तत्र उभौ अपि दिवं गतौ ।

मनोरमायाः पिता वीरसेनः कलिङ्गदेशस्य राजा आसीत् । जामातुः मरणवार्तां श्रुत्वा दिग्भ्रान्तः सः दौहित्रस्य सुदर्शनस्य दर्शनार्थम् अयोध्याम् आगतवान् । एवम् एव उज्जयिनीतः शत्रुजितः मातामहः युधाजिदपि आगतः ।

सुदर्शनः राजा भवेत् उत शत्रुजित् इत्येषः अंशः अनिर्णीतः आसीत् । उभे अपि मातरौ इच्छतः स्म - 'मम पुत्रः एव राजा भवेत्' इति । तयोः पितरौ पुत्र्याः पक्षं समर्थितवन्तौ । अतः पक्षद्वये शत्रुभावः उत्पन्नः । अन्ते उभयोः अपि पक्षयोः सङ्घर्षः जातः । एतस्मिन् सङ्घर्षे युधाजित् वीरसेनं मारितवान् ।

मनोरमा बालकेन सुदर्शनेन सह भरद्वाजाश्रमं गतवती । भरद्वाजः तयोः स्वागतं कृतवान् । शत्रुभ्यः तौ रक्षितवान् च । सुदर्शनस्य विद्याभ्यासव्यवस्था तेन कारिता । यदा सुदर्शनः प्राप्तवयस्कः जातः तदा महादेवी तस्य पुरतः प्रत्यक्षीभूय तस्मै अस्त्रविद्यां दत्तवती ।

शशिकला काशीराजस्य सुबाहोः पुत्री । सौन्दर्यखनी सा । एतत् जानन् सुदर्शनः तां

परिणेतुम् इष्टवान् । शशिकला अपि सुदर्शनं परिणेतुम् इच्छति स्म ।

सुबाहुः स्वपुत्र्याः स्वयंवरम् उद्घोषितवान् । विभिन्नदेशेभ्यः राजानः काशीम् आगताः । किन्तु शशिकला उक्तवती यत् ऋते सुदर्शनात्, अन्यं कमपि न परिणेष्यामि इति ।

तदा राज्ञी पुत्रीम् उक्तवती – "भवत्याः वैवाहिकसम्बन्धम् इच्छन्तः बहवः राजानः अत्र आगताः सन्ति । एतादृशे अवसरे भवत्याः वचनं कथं सङ्गच्छेत ? एतस्मात् वयं विपत्तिग्रस्ताः स्याम । बहवः राजानः अस्माकं शत्रवः भवेयुः । युद्धं प्रवर्तेत । तदा अस्माकं विनाशः अपि सम्भवेत्" इति ।

किन्तु शशिकला अन्यराजकुमारस्य परिणयप्रस्तावं सर्वथा निराकृतवती । सा पितरं स्पष्टोक्त्या उक्तवती – "भवान् एतेभ्यः राजकुमारेभ्यः बिभ्यति । अतः एवं करोतु । सुदर्शनाय मां दत्त्वा विवाहं निर्वर्त्य रथे उपवेश्य राज्यतः बहिः प्रेषयतु । तदनन्तरं यदि युद्धं भवेत् तर्हि आवां शत्रून् संहरिष्यावः" इति ।

"वत्से ! बहूनां विरोधः न शोभते । सर्वैः राजाभिः सह युद्धं लीलाविषयः न । वयं भवन्तौ रथे उपवेश्य राज्यसीमातः बहिः प्रेषयेम चेदपि किं ते दुष्टाः भवन्तौ आक्रम्य न नाशयेयुः ? तादृशे अवसरे भवन्तौ किं वा कर्तुं शक्नुयाताम् ? एतस्य क्लेशस्य परिहारार्थम् एकः एव उपायः – सीतायाः स्वयंवरे इव कापि परीक्षा व्यवस्थापनीया इति । तस्यां यः जयं प्राप्नोति सः परिणेतव्यः भवत्या" इति अवदत् राजा ।

"किम् एतेन समस्यापरिहारः भवेत् ?



स्पर्धायां यः जयति तम् अहं परिणेष्यामि चेत् किम् अन्ये राजानः तूष्णीं तिष्ठेयुः ? तदापि युद्धं स्यादेव । अतः महादेव्यां विश्वस्य सुदर्शनाय मां दत्त्वा विवाहं निर्वर्तयतु" इति शशिकला उक्तवती । पुत्र्याः निर्णयम् अङ्गीकृतवान् राजा सुबाहुः ।

सः रहसि पुत्र्याः विवाहस्य सन्नाहम् आरब्धवान् । सः सुदर्शनम् आहूय शास्त्रोक्त-विधिना कन्यादानं कृतवान् । ततः जामात्रे द्विशतं रथान्, सहस्रम् अश्वान्, सहस्रशः पदातीन्, अमूल्यानि वस्तूनि च उपायनरूपेण दत्तवान् । अनन्तरं सः मनोरमाम् उक्तवान् – "इतःपरं मम पुत्री भवत्याः पुत्रस्य अधीना । तां प्रेम्णा पश्यतु इति मम प्रार्थना" इति ।

सन्तुष्टा मनोरमा अवदत् – "राज्य-विहीनाय अपि मम पुत्राय स्वपुत्रीं यच्छता भवता महान् एव उपकारः कृतः । भवादृशः



उत्तम पुरुषः नितरां विरलः । भवतः पुत्री इतःपरं ममापि पुत्री इव । किन्तु अस्माकं सर्वेषां रक्षणदायित्वं भवतः'' इति ।

तदा सुबाहुः अवदत् - ''भवत्याः पुत्रः राज्यविहीनः कथं भवेत् ? मम समग्रं राज्यं, सकलम् ऐश्वर्यं च तदधीनम् एव । जगदम्बा यावत् अस्माकं रक्षिकात्वेन तिष्ठति तावत् भीतिः किमर्थम् ?'' इति ।

''अहो, श्रवणरमणीयानि वचनानि भवतः । शुभमस्तु भवतः । भवान् स्वस्य राज्यं पालयतु । यदि जगदम्बायाः कृपा स्यात् तर्हि मम पुत्रः तदीयं पैतृकं राज्यं प्रतिप्राप्नुयात् कदाचित् । यदि दैवानुग्रहः स्यात् तर्हि स्पृष्टा मृत्तिका अपि सुवर्णायेत । मम पुत्रस्य भाग्यचक्रम् इदानीम् उत्तमम् अस्ति । अतः तस्य अहितं किमपि न भविष्यति'' इति उक्तवती मनोरमा ।

एवं सुबाहुः रहसि विवाहं निर्वर्त्य पुत्रीजामातरौ यदा प्रेषयितुम् उद्युक्तः तदा केचन आगत्य उक्तवन्तः - ''इदानीं वधूवरयोः प्रेषणं मास्तु । यतः मार्गे शत्रवः राक्षसाः इव एतयोः संहारार्थं स्थिताः सन्ति'' इति ।

राजा सुबाहुः अनुभवी आसीत् । सः वस्तुस्थितेः अवगमने समर्थः अपि आसीत् । अतः सः जामातृपुत्र्योः प्रेषणे सन्दिहानः आसीत् । तदा सुदर्शनः उक्तवान् - ''आवयोः प्रेषणे भीतिः किमर्थम् ? यावत् देवी अस्माकं पक्षे स्थास्यति तावत् कोऽपि शत्रुः मम केशम् अपि कम्पयितुं न अर्हति'' इति ।

ततः काशीराजः जामात्रे अमूल्यानि उपायनानि सेनां च दत्त्वा जामात्रा सह स्वयम् अपि प्रस्थितवान् । मध्येमार्गं सुदर्शनस्य आगमनं प्रतीक्षमाणाः स्थितवन्तः शत्रवः दूरात् एव एतान् दृष्ट्वा परस्परम् उक्तवन्तः - ''तत्र दृश्यते रथः । तत्र सुदर्शनः अपि दृश्यते । सपत्नीकः आगच्छन् अस्ति सः । तं संहराम वयम्'' इति ।

सुबाहुः शत्रुराजान् अवरुद्धवान् । सुदर्शनः मन्त्रजपम् आरब्धवान् । देव्याः ध्यानं कृतं तेन । तत्समये युधाजित् शत्रुजित् च तम् आक्रान्तवन्तौ । एतस्मात् कुपितः सुबाहुः युधाजितः उपरि बाणवर्षणम् आरब्धवान् । उभयोः अपि घोरं युद्धं प्रवृत्तम् ।

एतदभ्यन्तरे जगदम्बा पुष्पमालालङ्कृता सिंहवाहनम् आरूढा, आयुधैः उपेता च सती प्रत्यक्षा जाता । देवीं दृष्टवतः सुदर्शनस्य शरीरं पुलकितं जातम् । सः तां श्वशुराय दर्शयन् अवदत् - ''इतःपरं भीतेः न कोऽपि

अवसरः'' इति । ततः सः रथात् अवतीर्य सपत्नीकः देवीं साष्टाङ्गं नमस्कृतवान् ।

तस्याः वाहनं सिंहं दृष्ट्वा शत्रुराजाः भीताः । ते प्रतिगमनम् आरब्धवन्तः । तदा सिंहः सकृत् गर्जनम् अकरोत् । तस्मिन् एव समये महान् वायुः अपि आगतः। अतः शत्रुराजाः किङ्कर्तव्यतामूढाः सन्तः स्थितवन्तः ।

तदा सुदर्शनः सेनापतिम् उक्तवान् - ''महादेवी अस्माकं पक्षे अस्ति । अतः भवान् निस्सङ्कोचं शत्रूणाम् उपरि पततु । एतदर्थं सेनाम् आज्ञापयतु'' इति ।

एतदनन्तरं काशीराजस्य सेना शत्रुपक्षस्य उपरि अपतत् । निश्चेष्टतया स्थितान् राज्ञः युधाजित् अवदत् - ''सिंहम् आरुह्य आगतां काञ्चित् स्त्रियं दृष्ट्वा किं भवन्तः सर्वे दिग्भ्रान्ताः ? स्त्री अबला इति किं न ज्ञायते ? अग्रे सरन्तु । क्षणाभ्यन्तरे सुदर्शनं मृत्युवेदिकाम् आरोपयाम । काशीराजस्य पत्नीं च वशीकरवाम'' इति । ततः सः पौत्रेण शत्रुजिता सह गत्वा सुदर्शनेन सह युद्धम् आरब्धवान् ।

तदा देवी सर्वेभ्यः राजभ्यः स्वस्य विविधानि रूपाणि दर्शितवती । सर्वैः सह एकाकितया युद्धम् आरब्धवती च । क्षणाभ्यन्तरे युधाजित् शत्रुजित् च देव्याः बाणानां बलिभूताः सन्तः भूमिम् आश्रितवन्तः । सुबाहुः आनन्दाश्रूणि स्रावयन् पराशक्त्याः स्तोत्रं कृतवान् । ततः सः देवीम् अवदत् - ''जगदम्ब ! भवत्याः दर्शनतः अहं धन्योऽस्मि । मम हृदये स्थिरतया तिष्ठतु भवती । यावत् भूमिः स्थास्यति तावत् काशी अपि अविनाशिनी इति वचनं श्रूयते । एतस्यां



नगर्यां भवती वसतु । मां काशीं च शत्रुभयात् विदूरं करोतु । भवत्याः साहाय्यम् अस्ति चेत् किम् अन्यत् आवश्यकं मम ?'' इति ।

महादेवी एतस्याः प्रार्थनायाः पुरस्कारम् अङ्गीकृतवती । ततः सुदर्शनः महादेव्याः स्तोत्रं कृत्वा - ''अम्ब ! इदानीं मम कर्तव्यं किम् ? मया कुत्र गन्तव्यम् ? अहं तु स्वयम् असमर्थः । तथापि भवत्याः अनुग्रहः अस्ति चेत् कठिनातिकठिनम् अपि कार्यं लीलया साधयिष्यामि । अतः मम कर्तव्यम् उपदिशतु कृपया'' इति प्रार्थितवान् ।

''इदानीं सपत्नीकः अयोध्यां गच्छतु । सिंहासनम् आरुह्य न्याय्येन मार्गेण राज्यं परिपालयतु । अहं भवतः रक्षणं करिष्यामि । अष्टम्यां नवम्यां चतुर्दश्यां च मम पूजां करोतु । शरत्कालः मम प्रियः कालः । नवरात्र-पर्वकाले मम पूजा क्रियताम् । माघे चैत्रे

आश्वयुजे आषाढे च मदीयम् उत्सवम् आचरतु'' इति उक्त्वा ततः अदृश्या अभवत् महादेवी ।

ततः अन्ये राजानः एकैकशः अग्रे आगत्य यथा देवदेवताः इन्द्रं, तथा सुदर्शनं प्रणमन्तः अम्बायाः स्तुतिं कृतवन्तः । ते सर्वे सुदर्शनं चक्रवर्तित्वेन अङ्गीकृतवन्तः ।

अयोध्याप्राप्तितः पूर्वम् एव सुदर्शनस्य आगमनवार्ता अयोध्यावासिभिः प्राप्ता । अतः मन्त्रिप्रभृतयः मङ्गलवाद्यसहिततया आगत्य स्वागतं कृतवन्तः । सुदर्शनं सपत्नीकं सादरं प्रासादं नीतवन्तः ।

सुदर्शनः स्वस्य विमातुः समीपं गतवान् । सा स्वपुत्रस्य विनाशस्य निमित्तं रुदती आसीत् । सः विमातरम् उक्तवान् - ''अम्ब ! भवत्याः पुत्रं पितरं च अहं न मारितवान् । महाशक्त्या तयोः संहारः कृतः । तौ स्वस्य पापानां कारणतः एव मरणं प्राप्तवन्तौ । भवती माम् एव स्वपुत्रं भावयतु । अहं सदा भवत्याः सेवां करिष्यामि । यदा अहं बालकः आसं तदा भवत्याः पिता लोभेन मां देशात् निष्कासितवान् । एतत् मम दौर्भाग्यं भावितवान् अहम् । इदानीम् अपि कस्यचित् अपि विषये मम द्वेषः नास्ति । कस्मिंश्चिदपि मम शत्रुभावः अपि नास्ति'' इति ।

एतत् श्रुत्वा लीलावती लज्जाभावेन उक्तवती - ''मया निवार्यमाणः अपि मम पिता भवद्विषये द्रोहं कृतवान् । तस्य परिणामतः सः स्वयं मरणं प्राप्तवान् । पुत्रस्यापि मरणस्य कारणं जातः । भवतः माता मम सपत्नी । अतः भवान् अपि मम पुत्रः एव । भवान् मम पितुः पुत्रस्य च कारणं न इति अहं जानामि । अतः मया किमर्थं चिन्ता करणीया ?'' इति ।

तदनन्तरं सुदर्शनः मन्त्रिणां साहाय्येन एकं सुवर्णसिंहासनं निर्मापितवान् । तस्य उपरि जगदम्बायाः प्रतिष्ठापनं कृतम् । प्रतिदिनं तस्याः पूजा अपि आरब्धा । ततः तस्य राज्याभिषेकः प्रवृत्तः । अनन्तरं सः न्याय्येन मार्गेण राज्यं पालयन् सुखेन जीवितवान् ।





# कार्ये प्रवृत्तिः

राघवः प्रतिदिनं मन्दिरं गत्वा पुराणकथाः श्रावयति स्म । कोऽपि कमपि सन्देहं पृच्छति चेत् यथायोग्यम् उत्तरं वदति स्म सः । एतदर्थं प्रातः एव सः सन्नाहं करोति स्म । याः कथाः उच्यन्ते तासां विषये सम्यक् अधीत्य सम्भाव्यप्रश्नानाम् उत्तरकथने सामर्थ्यं सम्पादयति स्म सः ।

राघवस्य पत्नी सीता । सा कार्पासतः वर्तिकां निर्माय विक्रयणं करोति स्म । राघवसीतयोः त्रयः पुत्राः । ज्येष्ठः पुत्रः तक्षकवृत्तिं करोति स्म । तस्य पत्नी कमला । सा आदिनं गृहकार्येषु मग्ना भवति स्म । द्वितीयः पुत्रः कुमारः । सः अभिनयनिपुणः सङ्गीतविद्वान् च । अतः जनादरणपात्रतां गतः आसीत् सः । तृतीयः पुत्रः नरसिंहः । सः गृहपरिसरे उद्यानं निर्मितवान् आसीत् । उद्याने फलवृक्षाः, शाकादयः च वर्ध्यन्ते स्म । शाकादीनां विक्रयणतः सः उत्तमम् आयं प्राप्नोति स्म । आलस्यं दूरीकृत्य आदिनं कार्ये मग्नाः भवन्ति स्म सर्वे । अतः समग्रे ग्रामे सर्वेऽपि राघवस्य परिवारस्य प्रशंसां कुर्वन्ति स्म ।

पार्श्वग्रामे माधवस्य परिवारः आसीत् । तत्र तु राघवपरिवारे यत् सामञ्जस्यं दृश्यते तस्य विरुद्धा स्थितिः । श्वश्रूस्नुषयोः कलहः, भ्रात्रोः विवादः, परस्परतर्जनं च तत्र नित्यविषयः आसीत् । अतः माधवः एकस्मिन् दिने अपि शान्त्या सन्तोषेण च स्थातुं न अर्हति स्म । राघवस्य दूरबन्धुः माधवः । माधवः राघवपरिवारस्य विषये श्रुतवान् आसीत् एव । राघवपरिवारे ये शान्तिसौमनस्यादयः दृश्यन्ते तेषां कारणं



ज्ञातुम् इच्छन् माधवः पत्न्या सुलक्षणया सह कदाचित् राघवस्य गृहं प्रति गतवान् ।

राघवः तौ सन्तोषेण स्वागतीकृतवान् । एकं दिनं यावत् सर्वे आनन्देन वार्तालापं कृतवन्तः । अनन्तरदिने प्रातः राघवः यथापूर्वम् अध्ययने प्रवृत्तः जातः ।

तदा माधवः आक्षेपपूर्णस्वरेण अवदत् - "दिनद्वयं भवता सह सन्तोषेण स्थातव्यम् इति चिन्तयित्वा अहम् अत्र आगतः । किन्तु भवान् अध्ययने प्रवृत्तः । अध्ययनं तु प्रतिदिनं क्रियते । अतः पुस्तकं पिदधातु । सन्तोषेण वार्तालापं करवाव" इति ।

एतत् श्रुत्वा राघवः हसन् उक्तवान् - "दीर्घकालात् अनुवर्तितः अभ्यासः सकृत् परित्यक्तः चेत् पुनः तस्य समीकरणं कष्टसाध्यम् । ह्यः आदिनं वार्तालापः कृतः । अद्यापि यावत् आवश्यकं तावत् वार्तालापः क्रियते एव । इदानीं तु तादृशी आवश्यकता नास्ति । अतः अहं पठने उद्युक्तः । भवान् अपि मया सह पुराणसाहित्यं परिशीलयतु । तेन भवता अपि आनन्दः प्राप्यते, ममापि उत्साहः वर्धते । समयोऽपि योग्येन क्रमेण यापितः स्यात्" इति ।

"भवतः कथनात् मम भासते यत् अहं भवतः गृहम् आगत्य भवदीयं समयं व्यर्थीकृतवान् इति । चिन्तने विघ्नः उत्पादितः मया । इतःपरं भवतः गृहं प्रति न आगन्तव्यं मया" इति असन्तोषेण उक्तवान् माधवः ।

"भवतः आगमनं मम पीडायै इति मया कदापि न चिन्तितम् । आवां मिलित्वा पुराणं परिशीलयाव । तत् भवते न रोचते चेत् स्थगयाव । अग्रे किं करणीयम् इति चिन्तयाव" इति उक्तवान् राघवः ।

ततः उभौ अपि पुराणाध्ययने मग्नौ जातौ । माधवस्य ये ये सन्देहाः भवन्ति स्म तेषां सर्वेषां समाधानं समीचीनतया वदति स्म राघवः । अल्पे एव काले पुराणाध्ययने माधवस्य आसक्तिः प्रवृद्धा । पुराणेषु एतादृशं गभीरं ज्ञानं भवति इति तेन तस्मिन् एव दिने ज्ञातम् ।

अतः माधवः राघवम् उक्तवान् - "अहम् अद्यावधि कूपमण्डूकः इव आसम् । इतःपरं पुराणाध्ययनार्थम् एव भवतः गृहम् आगमिष्यामि तदा तदा । मम गृहं प्रति यदा भवान् आगमिष्यति तदा कश्चन पुराणग्रन्थः भवता अविस्मृत्य आनेतव्यः" इति ।

एतस्मिन् एव काले माधवस्य पत्नी सुलक्षणा सीतां वदति स्म – ''एतस्मिन् वार्धक्ये किमर्थम् एषः वर्तिकानिर्माण-श्रमः ? स्नुषा तु गृहे अस्ति एव । अतः भवती सुखेन कालं यापयतु । किम् एतादृशेन श्रमेण ?'' इति ।

''यदा शरीरे सामर्थ्यम् आसीत् तदा समग्रं गृहकार्यम् अहम् एव करोमि स्म । इदानीं तु सुखेन उपविशामि । व्यर्थ-कालयापनं न रोचते मह्यम् । अतः वर्तिकां निर्मान्ती भवामि'' इति उक्तवती सीता ।

तदा सुलक्षणा पुनः उक्तवती – ''भवती एकत्र उपविश्य वर्तिकां निर्मान्ती तिष्ठति चेत् स्नुषा भवत्याः विषये सर्वथा अनादरवती भवेत् । भवती उपस्थिता चेत् न उत्तिष्ठेत् अपि सा । पाकविषये गृहव्यवस्थाविषये वा भवत्याः मार्गदर्शनम् अपि न पृच्छेत् । गृहे भवती ज्येष्ठा काचित् अस्ति, भवत्याः आदरः करणीयः इत्येतत् एव विस्मृतवती भवेत् सा । भवतीं परकीयां भावयेत् अपि । अतः स्वस्थानस्य रक्षणं करणीयम् एव खलु भवत्या ?'' इति ।

एतत् श्रुत्वा सीता मन्दहासपूर्वकम् उक्तवती – ''पूर्वम् अहम् अपि एवम् एव चिन्तयामि स्म । प्रतिवेशिनीनां पुरतः स्नुषायाः निन्दनम् अपि करोमि स्म । स्नुषां तर्जयामि स्म अपि । एतस्मात् मम मनसः शान्तिः अपगच्छति स्म । स्नुषायाः विषये प्रतीकारभावना मयि भवति स्म । तेन च रक्तचापः वर्धते स्म । ततः अस्वास्थ्यम् अपि भवति स्म । तदा वैद्येन सूचितं यत् विना कार्यं कदापि न स्थातव्यं, सामर्थ्यानुगुणं किमपि कार्यं करणीयम् इति । यदि कार्यम् एव न भवति तर्हि मनसि अनेके सन्देहाः उत्पद्यन्ते । ततः मनः दुश्चिन्तनस्य आश्रयः भविष्यति । यदि कार्ये निरन्तरप्रवृत्तिः भवति तर्हि मनः दुष्टचिन्तनं न करोति । गृहे शान्तिः भविष्यति'' इति ।

सुखशान्त्योः कारणं किम् इति एतस्य श्रवणात् अवगतवती सुलक्षणा ।



# भूस्वामिनः वयः

द्रोणपुर्याः राज्ञः मणिचन्द्रस्य अकालमरणं जातम् । तदा पञ्चविंशतिवर्षीयः तदीयः पुत्रः भुवनचन्द्रः सिंहासनम् आरुह्य राज्यशासनम् आरब्धवान् । राज्यशासने साहाय्यं कर्तुं समर्थाः मन्त्रिणः आसन् एव । अतः राजा तदा तदा मृगयार्थं गच्छति स्म, दशपञ्चदशदिनानाम् अनन्तरं राजधानीं प्रत्यागच्छति स्म च ।

भुवनचन्द्रः कदाचित् मृगयार्थं गतवान् । रात्रिः जाता । राजा सैनिकान् पृष्टवान् – ''अद्य रात्रौ वासं कुत्र करवाणि ?'' इति । तावता शेखरवर्मनामकः भूस्वामी तत्र आगत्य राजानं निवेदितवान् – ''अद्य रात्रौ मम गृहं प्रति आगत्य आतिथ्यं स्वीकरणीयम्'' इति । राजा एतत् अङ्गीकृत्य शेखरवर्मणः गृहं गतवान् ।

रात्रौ वार्तालापसमये भुवनचन्द्रः शेखरवर्माणम् अपृच्छत् – ''भवतः किं वयः ?'' इति ।

''महाराज ! षष्टिः सप्ततिः वा वर्षाणि स्युः मम'' इति उक्तवान् शेखरवर्मा ।

तदा भुवनचन्द्रः आश्चर्येण पृष्टवान् – ''वयः दिने दिने वर्धते । आयुः क्षीयते । क्षीयमाणस्य आयुषः गणना सम्यक् करणीया खलु ? किम् एतद्विषये कदापि न चिन्तितम् एव भवता ?'' इति ।

एतत् श्रुत्वा शेखरवर्मा हसन् उक्तवान् – ''महाराज ! मम विशाला कृषिभूमिः अस्ति । पेटिकासु धनराशिः अस्ति । एतेषां सर्वेषां विषये अहं सावधानः भवामि, यतः एतेषाम् अपहरणसम्भावना अस्ति । किन्तु वयसः अपहरणं कर्तुं न शक्यते । अतः तस्य विषये चिन्तनं, तदर्थं समयव्ययः च व्यर्थः इति भावना मम'' इति ।

*– काशीनाथः*



चन्दमामाप्रस्तुतिः

# अजेयः गरुडः

चित्रं - पाणिः

चन्द्रपुर्याः स्वर्गस्थस्य प्रधानमन्त्रिणः पुत्रः आदित्यः सेनापतेः नरेन्द्रदेवस्य, शत्रुरस्य रवीन्द्रदेवस्य च विविधानि कुतन्त्राणि विफलीकृतवान् । राजा महेन्द्रदेवः आदित्यं प्रधानमन्त्रिणं कृतवान् । पितुः आदेशस्य अनुसारं सप्तम्यां पूर्णिमायां पूजां कृतवान् आदित्यः । तदा प्रकोष्ठः प्रकाशमयः जातः । पुरतः स्थिता पिक्षमूर्तिः महाकारता प्राप्य तस्य पुरतः अतिष्ठत् ।

तेन च प्रकाशने आदित्यः पूर्णरूपेण आवृतः । तदीयशरीरे परिवर्तनं जातम् । एतच्च अवगतम् आदित्येन ।

अल्पे एव काले तदीयं शरीरं पक्षद्वयेन युक्तं जातम् ।

तस्य शिरसि चञ्चूः उद्भूता । तस्य नेत्रे रक्तवर्णीये जाते । पादौ धातुमयेन आवरणेन आवृतं जातम् ।












परितः प्रसृतः प्रकाशः पुञ्जीभूय आदित्यस्य शरीरं प्राविशत् ।
तेन तं परितः रक्षाकवचं निर्मितम् अभवत् इव ।


कः उपस्थितः स्यात् इदानीम्
प्रकोष्ठे पुनः अन्धकारः प्रसृतः । द्वारताडनशब्दः श्रुतः आदित्येन ।


अरुणे ! भवती !!
इतः निर्गच्छन्ती अहं एकं प्रकाशम् अपश्यम् । ततः मूर्च्छाम् अगच्छम् । यदा सचेतनतां प्राप्य अत्र आगता तदा भवदीयौ अङ्गरक्षकौ अपि मूर्च्छितौ दृष्टौ मया । आदित्य ! कुशली खलु भवान् ।


अहं निरापदः अस्मि । अत्र यः अनुभवः प्राप्तः तं कमपि मा वदतु इति मम प्रार्थना । इतः गता भवती रामसिंहाय एतत् ददातु ।
आदित्य ! भवन्तं परितः किमपि विशेषकवचम् अस्ति इति भाति । भवतः सन्देशवहनं मम सौभाग्यस्य विषयः । एषाऽहं प्रस्थिता ।


अहमेव एतदर्थं किमर्थं चितः तात ! अहं तु सामान्यः ।
भवतः इच्छां पूरयिष्यामि इति प्रतिजाने । तदर्थम् एव जीवनं मम ।


तस्मिन् एव समये गरुडः इव मुखावरणं धृत्वा केचन लुण्ठनम् आरब्धवन्तः ।


एषा वार्ता आदित्येन प्राप्ता ।
श्रीमन् ! एतत्सर्वम् नरेन्द्रदेवेन कृतं कृतघ्न ।
रामसिंह ! अस्माभिः एतस्य योग्यं दण्डनं करणीयम् ।


महाराजस्य प्रकोष्ठे अनन्तरदिने
गरुडवेषं धृत्वा आगताः षड् आसन् महाराज !


सर्वेषां पुरतः श्वः ते शूलम् आरोपणीयाः । एतां वार्तां सर्वत्र श्रावयतु ।
यथाज्ञापयति महाराजः ।


समग्रे देशे एषा वार्ता प्रसारिता ।


रवीन्द्रदेवः चिन्ताक्रान्तः जातः ।
इदानीं किं करणीयम् अस्माभिः ?
जनानां पुरतः शूलारोपणं कथमपि स्थगनीयम् ।
अनुवर्तते

# राजनर्तक्याः चित्रम्

पूर्वम् अवन्तीनगरे सुहर्षनामकः कश्चन युवकः चित्रकारः वसति स्म । तस्मिन् नगरे अन्येऽपि श्रेष्ठाः चित्रकाराः आसन् एव । तथापि जनाः सुहर्षस्य एव प्रशंसां कुर्वन्ति स्म आधिक्येन । धनिकाः वणिजः राजकुटुम्बीयाः च तस्य द्वारा चित्राणि लेखयित्वा तस्य भूरिप्रशंसां कुर्वन्ति स्म । चित्रनिर्माणानन्तरं कोऽपि प्रशंसात्मकं निन्दात्मकं वा वचनं वदति चेत् सुहर्षः मौनेन शृणोति स्म । अन्यस्य मनः यथा खिन्नं न भवेत् तथा वदति स्म च । अन्यस्य मनसः खेदनं कदापि न करोति स्म सः ।

कदाचित् राजनर्तकी भासुराङ्गी तस्य ख्यातिं श्रुतवती । सा सुहर्षद्वारा चित्रं कारितवती । ततः सा तदीयनैपुण्यस्य प्रशंसां कुर्वती उक्तवती – ''सौन्दर्यविषये नाट्यकलाविषये च ज्ञानवन्तः महापण्डिताः एतस्यां राजधान्यां सन्ति बहवः । राजा अपि तेषु अन्यतमः । ते सर्वे मम प्रशंसां कृतवन्तः । 'मम यादृशं सौन्दर्यम् अस्ति तादृशं विश्वे अन्यत्र कुत्रापि नास्ति' इति वदन्ति स्म ते । 'तेषां प्रशंसा मिथ्या न' इति भवतः चित्रस्य दर्शनस्य अनन्तरं मम स्पष्टं जातम् । अपूर्वं चित्रकलाकौशलं भवतः'' इति ।

तदनन्तरं दश वर्षाणि अतीतानि । भासुराङ्गी पुनरपि सुहर्षम् आनाय्य स्वस्य चित्रं लेखितवती । महता श्रमेण मासाभ्यन्तरे सुहर्षः तस्याः चित्रं सज्जीकृतवान् ।

भासुराङ्गी तत् चित्रं दृष्ट्वा असन्तोषेण उक्तवती – ''भवता लिखितम् चित्रं दृष्टवत्याः मम महत् आश्चर्यम् । एतत् मम चित्रम् इत्यत्र ममैव विश्वासः न भवति । किं मम एतत् रूपं दृष्ट्वा जनाः मां परमसुन्दरीं वदेयुः ?'' इति ।

तदा सुहर्षः शान्तस्वरेण अवदत् – ''देवि ! मया भवत्याः सुन्दरं चित्रं यदा लिखितम् आसीत् तदा अहं तरुणः आसम् । इदानीं मम यत् वयः अस्ति ततोऽपि दशवर्षाणि न्यूनम् आसीत् तदा मम वयः'' इति ।

– *सुमनलता*





किञ्चनं शीर्षिका

# चित्रशीर्षिकास्पर्धा





**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया –

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यन्ते ।

पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'अक्टोबर्'मासीयस्पर्धाशीर्षिकाप्रेषकः –**

**पि.पि.करुणाकरन् नायर्**

**मङ्गला, बोल्लिकोट्, अजनूरु पो.**

**कासरगोड्डु जि., केरलम्**

## पुरस्कृतशीर्षिका





**स्मेरान्वितः गानभावः ।**

**स्मेरपूर्वकः प्रयाणभावः ॥**




Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswan

